व्याघ्रादिभिर्वनचरैर्मयूराद्यैश्च पक्षिभिः।
क्रीडयेन्मृगयां कुर्याद्दुष्टसत्वान्निपातयन् ॥ ३३३ ॥
शौर्यं प्रवर्धते नित्यं लक्ष्यसन्धानसाधनं।
अकातरत्वं शस्त्रास्त्रशीघ्रपातनकारिता ॥ ३३४ ॥
मृगयायां गुणा एते हिंसादोषो महत्तरः ॥ ३३४" ॥
इंगितं चेष्टितं यत्नात् प्रजानामधिकारिणां।
प्रकृतीनां च शत्रूणां सैनिकानां मतं च यत् ॥(३३५")॥
सभ्यानां बांधवानां च स्त्रीणामन्तःपुरे च यत्।
शृणुयाद्गूढचारेभ्यो निशि चात्ययिकं सदा ॥ ३३६" ॥
सावधानमनास्सिद्धशस्त्रास्त्रस्संछिखेच्च तत् ॥ ३३७ ॥
असत्यवादिनं गूढचारं नैव च शास्ति यः।
स नृपो म्लेच्छ इत्युक्तः प्रजाप्राणधनापहः ॥ ३३८ ॥
वर्णितपस्विसंन्यासिनीचसिद्धस्वरूपिणं।
प्रत्यक्षेण छलेनैव गूढचारं विशोधयेत् ॥ ३३९ ॥
विना तच्छोधनात् तत्त्वं न जानाति च तप्यते।
अशोधकनृपान्नैष विभेत्यनृतवादने ॥ ३४० ॥
प्रकृतिभ्योऽधिकृतेभ्यो गूढचारं सुरक्षयेत्।
सदैकनायकं राज्यं कुर्यान्न बहुनायकं ॥ ३४१ ॥
नानायकं क्वचिदपि कर्तुमीहेत भूमिपः।
राजकुले तु बहवः पुरुषा यदि सन्ति हि।
तेषु ज्येष्ठो भवेद्राजा शेषास्तत्कार्यसाधकाः ॥ ३४२ ॥
गरीयांसो वरास्सर्वसहायेभ्योऽभिवृद्धये ॥ ३४३ ॥
ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धष्षंड एव यः।
स राज्यार्हो भवेन्नैव भ्राता तत्पुत्र एव हि ॥ ३४४ ॥

स्वकनिष्ठोऽपि ज्येष्ठस्य भ्रातुः पुत्रस्तु राज्यभाक् ॥३४४॥
यथाग्रजस्य चाभावे कनिष्ठा राज्यभागिनः ॥३४५॥
दायादानामैकमत्यं राज्ञश्श्रेयस्करं परं।
पृथग्भावो विनाशाय राज्यस्य च कुलस्य च ॥३४६॥
अतस्स्वभोगसदृशान् दायादान् कारयेन्नृपः।
अव्याहताज्ञस्सन्तुष्येच्छत्रसिंहासनैरपि ॥३४७॥
राज्यविभजनाच्छ्रेयो न भूपानां भवेत् खलु।
अल्पीकृतं विभागेन राज्यं शत्रुर्जिघृक्षति ॥३४८॥
राज्यतुर्यांशदानेन स्थापयेत् तान् समन्ततः।
चतुर्दिक्ष्वथवा देशाधिपान् कुर्यात् सदा नृपः ॥३४९॥
गोगजाश्वोष्ट्रकोशानामाधिपत्ये नियोजयेत्।
माता मातृसमा या च सा नियोज्या महानसे ॥३५०॥
सेनाधिकारे संयोज्या बांधवास्स्यालकास्सदा।
स्वदोषदर्शकाः कार्या गुरवस्सुहृदश्च ये ॥३५१॥
वस्त्रालंकारपात्राणां स्त्रियो योज्यास्सुदर्शने।
स्वयं सर्वं तु विमृशेत् पर्यायेण च मुद्रयेत् ॥३५२॥
अन्तर्वेश्मनि रात्रौ वा दिवारण्ये विशोधिते।
मन्त्रयेन्मन्त्रिभिस्सार्धं भाविकृत्यं तु निर्जने ॥३५३॥
सुहृद्भिर्भ्रातृभिस्सार्धं सभायां पुत्रबांधवैः।
राजकृत्यं सेनपैश्च सभ्याद्यैश्चिन्तयेत् सदा ॥३५४॥
सभायां प्रत्यगर्धस्य मध्ये राजासनं स्मृतं।
दक्षसंस्था वामसंस्था विशेयुः पार्श्वकोष्ठगाः ॥३५५॥
पुत्राः पौत्रा भ्रातरश्च भागिनेयास्स्वपृष्ठतः।
दौहित्रा दक्षभागात्तु वामसंस्थाः क्रमादिमे ॥३५६॥

पितृव्यास्स्वकुलश्रेष्टास्सभ्यास्सेनाधिपास्तथा।
स्वाग्रे दक्षिणभागे तु प्राक्संस्थाः पृथगासनाः ॥ ३५७ ॥
मातामहकुलश्रेष्ठा मंत्रिणो बांधवास्तथा।
श्वशुराश्चैव स्यालाश्च वामाग्रे चाधिकारिणः ॥ ३५८ ॥
वामदक्षिणपार्श्वस्थौ जामाता भगिनीपतिः।
स्वसदृशस्समीपे वा स्वार्धासनगतस्सुहृत् ॥ ३५९ ॥
दौहित्रभागिनेयानां स्थाने स्युर्दत्तकादयः।
भागिनेयाश्च दौहित्राः पुत्रादिस्थानसंश्रिताः ॥ ३६० ॥
यथा पिता तथाचार्यस्समश्रेष्टासने स्थितः।
पार्श्वयोरग्रतस्सर्वे लेखका मंत्रिपृष्टगाः ॥ ३६१ ॥
परिचारगणास्सर्वे सर्वेभ्यः पृष्टसंस्थिताः।
स्वर्णदण्डधरौ पार्श्वे प्रवेशनतिबोधकौ ॥ ३६२ ॥
विशिष्टचिह्नयुग्राजा स्वासने प्रविशेत् सुखं।
सुभूषणस्सुवसनः कवची मकुटान्वितः।
सिन्हासनगश्शस्त्रस्सन् सावधानमनास्सदा ॥ ३६३ ॥
सर्वस्माद्धिको दाता शूरस्त्वं धार्मिको ह्यसि।
इति वाचं न शृणुयाच्छ्रावका वंचकास्तु ते ॥ ३६४ ॥
रागाल्लोभाद्भयाद्राज्ञस्स्युर्मूका इव मंत्रिणः।
न तान् अनुमतान् विद्यान्नृपतिस्स्वार्थसिद्धये ॥ ३६५ ॥
पृथक्पृथङ्मतं तेषां लेखयित्वा ससाधनं।
विमृशेत् स्वमतेनैव यत् कुर्याद्बहुसंमतं ॥ ३६६ ॥
गजाश्वरथपश्वादीन् भृत्यान् दासांस्तथैव च।
संभारान् सैनिकान् कार्यक्षमान् ज्ञात्वा दिने दिने।
संरक्षयेत् प्रयत्नेन सुजीर्णान् संत्यजेत् सुधीः ॥ ३६७ ॥

शतक्रोशभवां वार्तां हरेदेकदिनेन वै।
सर्वविद्याकलाभ्यासे शिक्षयेद्भृतिपोषितान् ॥ ३६९ ॥
समाप्तविद्यं संदृष्ट्वा तत्कार्ये तं नियोजयेत्।
विद्याकलोत्तमान् दृष्ट्वा वत्सरे पूजयेच्च तान् ॥ ३७० ॥
विद्याकलानां वृद्धिस्स्यात् तथा कुर्यान्नृपस्सदा ॥ ३७०" ॥
पृष्ठाग्रगान् क्रूरवेषान् नतिनीतिविशारदान्।
सिद्धास्त्रनग्नशस्त्रांश्च भटान् आरान्नियोजयेत् ॥ ३७१" ॥
पुरे पर्यटयेन्नित्यं गजस्थो रंजयन् प्रजाः ॥ ३७२ ॥
राजयानारूढितः किं राज्ञा श्वा न समोऽपि च।
शुना समो न किं राजा कविभिर्भाव्यतेऽञ्जसा ॥ ३७३ ॥
अतस्त्ववांधवैर्मित्रैस्स्वसाम्यप्रापितैर्गुणैः।
प्रकृतिभिर्नृपो गच्छेन्न नीचैस्तु कदाचन ॥ ३७४ ॥
मिथ्यासत्यसदाचारैर्नीचस्साधुः क्रमात् स्मृतः।
साधुभ्योऽतिस्वमृदुत्वं नीचास्सन्दर्शयंति हि ॥ ३७५ ॥
ग्रामान् पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे।
अधिकारिगणैः काश्च रंजिताः काश्च कर्षिताः ॥(३७६)॥
प्रजास्तासां तु भूतेम व्यवहारं विचिंतयेत्।
न भृत्यपक्षपाती स्यात् प्रजापक्षं समाश्रयेत् ॥ ३७७ ॥
प्रजाशतेन संद्विष्टं संत्यजेदधिकारिणं।
अमात्यमपि संवीक्ष्य सकृदन्यायगामिनं।
एकान्ते दण्डयेत् स्पष्टमभ्यासागस्कृतं त्यजेत् ॥ ३७८" ॥
अन्यायवर्तिनां राज्यं सर्वस्वं च हरेन्नृपः ॥ ३७९ ॥
जितानां विपये स्थाप्यं धर्माधिकरणं सदा।
भृतिं दद्यान्निर्जितानां तच्चारित्र्यानुरूपतः ॥ ३८० ॥

स्वानुरक्तां सुरूपां च सुवस्त्रां प्रियवादिनीं।
सुभूषणां सुसंशुद्धां प्रमदां शयने भजेत् ॥ ३८१ ॥
यामद्वयं शयानो हि त्वत्यन्तं सुखमश्नुते।
न सन्त्यजेच्च स्वस्थानं नीत्या शत्रुगणं जयेत् ॥ ३८२ ॥
स्थानभ्रष्टा नो विभांति दन्ताः केशा नखा नृपाः।
संश्रयेद्गिरिदुर्गाणि महापदि नृपस्सदा ॥ ३८३ ॥
तदाश्रयाद्दस्युवृत्त्या स्वराज्यं तु समाहरेत्।
विनाश्रयान्न सिध्यन्ति पण्डिता वनिता लताः ॥ ३८४ ॥
विवाहदानयज्ञार्थं विनाप्यष्टांशशेषितं।
सर्वतस्तु हरेद्दस्युरसतामखिलं धनं ॥ ३८५ ॥
नैकत्र संवसेन्नित्यं विश्वसेन्नैव कं प्रति।
सदैव सावधानस्स्यात् प्राणनाशं न चिंतयेत् ॥ ३८६ ॥
क्रूरकर्मा सदोद्युक्तो निर्घृणो दस्युकर्मसु।
विमुखः परदारेषु कुलकन्याप्रदूषणे ॥ ३८७ ॥
पुत्रवत् पालिता भृत्यास्समये शत्रुतां गताः।
न दोषस्स्यात् प्रयत्नस्य भागधेयं स्वयं हि तत् ॥ ३८८ ॥
दृष्ट्वा सुविफलं कर्म तपस्तप्त्वा दिवं व्रजेत्।
उक्तं समासतो राजकृत्यं मिश्रेऽधिकं ब्रुवे ॥ ३८९ ॥

---

इति शुक्रनीतौ राजकृत्याधिकारो नाम प्रथमोऽध्यायः

---

श्रीः

# शुक्रनीतिः

## द्वितीयोऽध्यायः

यद्यप्यल्पतरं कर्म तदप्येकेन दुष्करं।
पुरुषेणासहायेन किमु राज्यं महोदयं ॥ १ ॥
सर्वविद्यासु कुशलो नृपो ह्यपि सुमंत्रवित्।
मंत्रिभिस्तु विना मन्त्रं नैकोऽर्थं चिन्तयेत् क्वचित् ॥ २ ॥
सभ्याधिकारिप्रकृतिसभासत्सु मते स्थितः।
सर्वदा स्यान्नृपः प्राज्ञस्स्वमते न कदाचन ॥ ३ ॥
प्रभुस्स्वातंत्र्यमापन्नो ह्यनर्थायैव कल्पते।
भिन्नराष्ट्रो भवेत् सद्यो भिन्नप्रकृतिरेव च ॥ ४ ॥
पुरुषे पुरुषे भिन्नं दृश्यते बुद्धिवैभवं ॥ ४ ॥
आप्तवाक्यैरनुभवैरागमैरनुमानतः।
प्रत्यक्षेण च सादृश्यैस्साहसैश्च छलैर्बलैः ॥(५)॥
वैचित्र्यं व्यवहाराणामौन्नत्यं गुरुलाघवैः।
न हि तत् सकलं ज्ञातुं नरेणैकेन शक्यते ॥ ६ ॥
अतस्सहायान् वरयेद्राजा राज्यविवृद्धये।
कुलगुणशीलवृद्धाञ्छूरान् भक्तान् प्रियंवदान् ॥(७)॥
हितोपदेशकान् क्लेशसहान् धर्मरतान् सदा।
कुमार्गगं नृपमपि बुध्योद्धर्तुं क्षमाञ्छुचीन्।
निर्मत्सरान् कामक्रोधलोभहीनान् निरालसान् ॥ ९ ॥

हीयते कुसहायेन स्वधर्माद्राज्यतो नृपः।
कुकर्मणा प्रनष्टास्तु दितिजाः कुसहायतः ॥(१०)॥
नष्टा दुर्योधनाद्यास्तु नृपाश्शूरा बलाधिकाः।
निरभिमानो नृपतिस्सुसहायो भवेदतः ॥ ११ ॥
युवराजोऽमात्यगणो भुजावेतौ महीभुजः।
तावेव नयने कर्णौ दक्षसव्यौ क्रमात् स्मृतौ ॥ १२ ॥
बाहुकर्णाक्षिहीनस्स्याद्विना ताभ्यामतो नृपः।
योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा ॥ १३ ॥
मुद्रां विनाखिलं राजकृत्यं कर्तुं क्षमं सदा।
कल्पयेद्युवराजार्थमौरसं धर्मपत्निजं ॥ १४ ॥
स्वकनिष्ठं पितृव्यं वानुजं वाग्रजसंभवं।
पुत्रं पुत्रीकृतं दत्तं यौवराज्येऽभिषेचयेत् ॥ १५ ॥
क्रमादभावे दौहित्रं स्वस्त्रीयं वा नियोजयेत्।
स्वहितायापि मनसा नैतान् संकर्पयेत् क्वचित् ॥ १६ ॥
स्वधर्मनिरताञ्छूरान् भक्तान् नीतिमतस्सदा।
संरक्षयेद्राजपुत्रान् बालानपि सुयत्नतः ॥ १७ ॥
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः।
रक्ष्यमाणा यदि छिद्रं कथंचित् प्राप्नुवंति ते।
सिंहशावा इव घ्नंति रक्षितारं द्विपं द्रुतं ॥ १८ ॥
राजपुत्रा मदोद्धूता गजा इव निरंकुशाः।
पितरं चापि निघ्नंति भ्रातरं त्वितरं न किं ॥ १९ ॥
मूर्खो बालोऽपीच्छीत स्म स्वाम्यं किं नु पुनर्युवा ॥ २० ॥
स्वात्यंतसन्निकर्षेण राजपुत्रांस्तु रक्षयेत्।
सद्भृत्यैश्चापि तत्स्वान्तं छलैर्ज्ञात्वा सदा स्वयं ॥ २१ ॥

सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान् ।
क्लेशसहांश्च वाग्दण्डपारुष्यानुभवान् सदा ॥(२२)॥
शौर्ययुद्धरतान् सर्वकलाविद्याविदोऽञ्जसः ।
सुविनीतान् प्रकुर्वीत ह्यमात्याद्यैर्नृपस्सुतान् ॥२३॥॥
सुवस्त्राद्यैर्भूषयित्वा लालयित्वा सुक्रीडनैः ।
अर्हयित्वासनाद्यैश्च पालयित्वा सुभोजनैः ॥(२४)॥
कृत्वा तु यौवराज्यार्हान् यौवराज्येऽभिषेचयेत् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥ २५ ॥
राजपुत्रस्सुदुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानस्स पितरं परानाश्रित्य हन्ति हि ॥ २६ ॥
व्यसने सज्जमानं तं क्लेशयेद्व्यसनाश्रयैः ।
दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबंधनं ॥ २७ ॥
सुदुर्वृत्तास्तु दायादा हन्तव्यास्ते प्रयत्नतः ।
व्याघ्रादिभिश्शत्रुभिर्वा छलै राष्ट्रविवृद्धये ॥ २८ ॥
अतोऽन्यथा विनाशाय प्रजाया भूपतेश्च ते ।
तोषयेयुर्नृपं नित्यं दायादास्स्वगुणैः परैः ॥ २९ ॥
भ्रष्टा भवंत्यन्यथा ते स्वभागाज्जीवितादपि ।
स्वसापिंड्यविहीना ये ह्यन्योत्पन्ना नराः खलु ॥ (३०) ॥
मनसापि न मंतव्या दत्ताद्यास्स्वसुता इति ।
तद्दत्तकत्वमिच्छंति दृष्ट्वा यं धनिकं नरं ॥ ३१ ॥
स्वकुलोत्पन्नकन्यायाः पुत्रस्तेभ्यो वरोह्यतः ।
अंगादंगात् संभवति पुत्रवद्दुहिता नृणां ॥(३२)॥
पिंडदाने विशेषो न पुत्रदौहित्रयोस्त्वतः ।
भूप्रजापालनार्थं हि भूपो दत्तं तु पालयेत् ॥|३३ ॥

नृपः प्रजापालनार्थं सधनश्चेन्न चान्यथा।
परोत्पन्ने स्वपुत्रत्वं मत्वा सर्वं ददाति तत् ॥ ३४ ॥
किमाश्चर्यमतो लोके न ददाति यजत्यपि।
प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च ॥ ३५ ॥
स्वसंपत्तिमदान्नैव मातरं पितरं गुरुं।
भ्रातरं भगिनीं वापि ह्यन्यान् वा राजवल्लभान्।
महाजनांस्तथा राष्ट्रे नावमन्येन्न पीडयेत् ॥ ३६ ॥
यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलं।
न मर्षयंति तत्संतो बाह्ये नाभिप्रदर्शनं ॥ ३७ ॥
प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया।
पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतं ॥ ३८ ॥
भार्गवेण हता माता राघवस्तु वनं गतः।
पितुस्तपोबलात् तौ तु मातरं राज्यमापतुः ॥ ३९ ॥
शापानुग्रहयोश्शक्तो यस्तस्याज्ञा गरीयसी।
सोदरेषु च सर्वेषु स्वस्याधिक्यं न दर्शयेत् ॥ ४० ॥
भागार्हभ्रातॄणां नष्टो ह्यवमानात् सुयोधनः।
पितुराज्ञोल्लंघनेन प्राप्यापि पदमुत्तमं ॥ ४१ ॥
तस्माद्भ्रष्टा भवंतीह दासवद्राजपुत्रकाः।
ययातेश्च यथा पुत्रा विश्वामित्रसुता यथा ॥ ४२ ॥
पितृसेवापरस्तिष्ठेत् कायवाङ्मानसैस्सदा।
तत्कर्म नियतं कुर्याद्येन तुष्टो भवेत् पिता ॥ ४३ ॥
तन्न कुर्याद्येन पिता मनागपि विषीदति ॥ ४४ ॥
यस्मिन् पितुर्भवेत् प्रीतिस्स्वयं तस्मिन् प्रियं चरेत्।
यस्मिन् द्वेषं पिता कुर्यात् स्वस्यापि द्वेष्य एव सः ॥ ४५ ॥

असंमतं विरुद्धं वा पितुर्नैव समाचरेत् ।
चारसूचकदोषेण यदि स्यादन्यथा पिता ॥(४६)॥
प्रकृत्यनुमतं कृत्वा तमेकान्ते प्रबोधयेत् ।
अन्यथा सूचकान् नित्यं महद्दंडेन दण्डयेत् ॥ ४७ ॥
प्रकृतीनां च कपटैस्स्वान्तं विद्यात् सदैव हि ।
प्रातर्नत्वा प्रतिदिनं पितरं मातरं गुरुं ॥(४८)॥
राजानं स्वकृतं यद्यन्निवेद्यानुदिनं ततः ।
एवं गृहाविरोधेन राजपुत्रो वसन् गृहे ॥(४९)॥
विद्यया कर्मणा शीलैः प्रजास्संरंजयन् मुदा ।
त्यागी च सत्वसंपन्नस्सर्वान् कुर्याद्वशे स्वके ॥ ५० ॥
शनैश्शनैः प्रवर्धेत शुक्लपक्षमृगांकवत् ।
एवंवृत्तो राजपुत्रो राज्यं प्राप्याप्यकंटकं ॥(५१)॥
सहायवान् सहामात्यश्चिरं भुंक्ते वसुंधरां।
समासतः कार्यमुक्तं युवराजस्य यद्धितं ॥ ५२ ॥
समासादुच्यते कृत्यममात्यादेश्च लक्षणं ।
मृदुगुरुप्रमाणत्ववर्णशब्दादिभिस्समं ॥ ५३ ॥
परीक्षकैर्द्रावयित्वा यथा स्वर्णं परीक्ष्यते ।
कर्मणा सहवासेन गुणैश्शीलकुलादिभिः ॥(५४)॥
भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वसेत् तदा ।
नैव जातिर्न च कुलं केवलं लक्षयेदपि ॥ ५५ ॥
कर्मशीलगुणाः पूज्यास्तथा जातिकुलेन हि ।
न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ ५६ ॥
विवाहे भोजने नित्यं कुलजातिविवेचनं ।
सत्यवाग्गुणसंपन्नस्तथाभिजनवान् धनी ॥(५७)॥

सुकुलश्च सुशीलश्च सुकर्मा च निरालसः।
यथा करोत्यात्मकार्यं स्वामिकार्यं ततोऽधिकं ॥(५८)॥
चतुर्गुणेन यत्नेन कायवाङ्मानसेन च।
भृत्यैव तुष्टो मृदुवाक् कार्यदक्षश्शुचिर्दृढः ॥(५९)॥
परोपकरणे दक्षो ह्यपकारपराङ्मुखः।
स्वाम्यागस्कारिणं पुत्रं पितरं वापि दर्शकः ॥(६०)॥
अन्यायगामिनि पतौ ह्यतद्रूपस्सुबोधकः।
नाक्षेप्ता तद्गिरं कां चित् तन्न्यूनस्याप्रकाशकः ॥(६१)॥
अदीर्घसूत्रस्सत्कार्ये ह्यसत्कार्ये चिरक्रियः।
न तद्भार्यापुत्रमित्रछिद्रदर्शी कदाचन ॥(६२)॥
तद्वद्बुद्धिस्तदीयेषु भार्यापुत्रादिबंधुषु।
न श्लाघते स्पर्धते न नाभ्यसूयति निंदति ॥(६३)॥
नेच्छत्यन्याधिकारं हि निस्पृहो मोदते सदा।
तद्दत्तवस्त्रभूषादिधारकस्तत्पुरोऽनिशं ॥(६४)॥
भृतितुल्यव्ययी दांतो दयालुश्शूर एव हि।
तदकार्यस्य रहसि सूचको भृतको वरः ॥ ६५ ॥
विपरीतगुणैरेभिर्भृतको निंद्य उच्यते।
ये भृत्या हीनभृतिका ये दंडेन प्रकर्पिताः ॥(६६)॥
शठाश्च कातरा लुब्धास्समक्षं प्रियवादिनः।
मत्ता व्यसनिनश्चार्ता उत्कोचेष्टाश्च देविनः ॥(६७)॥
नास्तिका दांभिकाश्चैवासत्यवाचोऽप्यसूयकाः।
ये चापमानिता येऽसद्वाक्यैर्मर्मणि भेदिताः ॥(६८)॥
रिपोर्मित्रास्सेवकाश्च पूर्ववैरानुबंधिनः।
चंडास्साहसिका धर्महीना नैते सुसेवकाः ॥ ६९ ॥

संक्षेपतस्तु कथितं सदसद्भृत्यलक्षणं ।
समासतः पुरोधादिलक्षणं यत् तदुच्यते ॥ ७० ॥
पुरोधाश्च प्रतिनिधिः प्रधानस्सचिवस्तथा ।
मंत्री च प्राड्विवाकश्च पंडितश्च सुमंत्रकः ॥(७१)॥
अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश ।
दशमांशाधिकाः पूर्वं दूतान्ताः क्रमशस्स्मृताः ॥ ७२ ॥
अष्टप्रकृतिभिर्युक्तो नृपः कैश्चित्स्मृतस्सदा ।
सुमंत्रः पंडितो मंत्री प्रधानस्सचिवस्तथा ॥(७३)॥
अमात्यः प्राड्विवाकश्च तथा प्रतिनिधिस्स्मृतः ।
एताभृतिसमास्त्वष्टौ राज्ञः प्रकृतयस्सदा ॥ ७४ ॥
इंगिताकारतत्त्वज्ञो दूतस्तदनुगस्स्मृतः ।
पुरोधाः प्रथमं श्रेष्ठस्सर्वेभ्यो राजराष्ट्रभृत् ॥ ७५ ॥
तदनु स्यात् प्रतिनिधिः प्रधानस्तदनन्तरं ।
सचिवस्तु ततः प्रोक्तो मंत्री तदनु चोच्यते ॥ ७६ ॥
प्राड्विवाकस्ततः प्रोक्तः पंडितस्तदनंतरं ।
सुमंत्रस्तु ततः ख्यातो ह्यमात्यस्तु ततः परं ॥ ७७ ॥
दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथागुणाः ॥ ७७‖ ॥
मंत्रानुष्ठानसंपन्नस्त्रैविद्यः कर्मतत्परः ।
जितेन्द्रियो जितक्रोधो लोभमोहविवर्जितः ॥(७८‖)॥
षडंगवित् सांगधनुर्वेदविच्चार्थधर्मवित् ।
यत्कोपभीत्या राजापि धर्मनीतिरतो भवेत् ॥(७९‖)॥
नीतिशस्त्रास्त्रव्यूहादिकुशलस्तु पुरोहितः ।
सैवाचार्यः पुरोधा यश्शापानुग्रहयोः क्षमः ॥ ८०‖ ॥
विना प्रकृतिसन्मंत्राद्राज्यनाशो भवेद्ध्रुवं ।

निरोधने विभेदेवं राजा ते स्युस्सुमंत्रिणः ॥८१॥
न विभेति नृपो येभ्यस्तैस्स्यात् किं राज्यवर्धनं ।
यथालंकारवस्त्राद्यैस्स्त्रियो भूष्यास्तथा हि ते ॥८२॥
राज्यं प्रजा वलं कोशस्सुनृपत्वं न वर्धितं ।
यन्मंत्रतो विनाशस्तैर्मंत्रिभिः किं प्रयोजनं ॥८३॥
कार्याकार्यप्रविज्ञाता स्मृतः प्रतिनिधिस्तु सः ।
सर्वदर्शी प्रधानस्तु सेनावित् सचिवस्तथा ॥८४॥
मंत्री तु नीतिकुशलः पंडितो धर्मतत्त्ववित् ।
लोकशास्त्रनयज्ञस्तु प्राड्विवाकस्स्मृतस्सदा ॥८५॥
देशलेखप्रविज्ञाता ह्यमात्य इति कथ्यते ।
आयव्ययप्रविज्ञाता सुमंत्रस्स च कीर्त्तितः ॥८६॥
इंगिताकारचेष्टाज्ञस्स्मृतिमान् देशकालवित् ।
पाड्गुण्यमंत्रविद्वाग्मी वीतभीर्दूत इप्यते ॥८७॥
आहितं चापि यत्कार्यं सद्यः कर्तुं यदोचितं ।
अकर्तुं यद्धितमपि राज्ञः प्रतिनिधिस्सदा ।
वोधयेत् कारयेत् कुर्यान्न कुर्यान्न प्रवोधयेत् ॥८९॥
सत्यं वा यदि वासत्यं कार्यजातं च यत् किल ।
सर्वेपां राजकृत्येपु प्रधानस्तद्विचिंतयेत् ॥९०॥
गजानां च तथाश्वानां रथानां पदगामिनां ।
सुदृढानां तथोष्ट्राणां वृपाणां सद्य एव हि ॥(९१)॥
वाद्यभापासुसंकेतव्यूहाभ्यसनशालिनां ।
प्राक्प्रत्यग्गामिनां राज्यचिह्नशस्त्रास्त्रधारिणां ॥(९२)॥
परिचारगणानां हीनमध्योत्तमकर्मणां ।
अस्त्राणामस्त्रजातीनां संघस्त्वतुरगीगणः ॥(९३)॥

कार्यक्षमश्च प्राचीनस्साद्यस्कः कति विद्यते ।
कार्यासमर्थः कत्यस्ति शस्त्रगोलाग्निचूर्णयुक् ॥(९४)॥
सांग्रामिकश्च कत्यस्ति संभारस्तान्विचिंत्य च ।
सचिवश्चापि तत्कार्यं राज्ञे सम्यङ्निवेदयेत् ॥ ९५ ॥
साम दानं च भेदश्च दंडः केषु कदा कथं ।
कर्तव्यः किं फलं तेभ्यो वहु मध्यं तथाल्पकं ।
एतत् संचिंत्य निश्चित्य मंत्री सर्वं निवेदयेत् ॥ ९६" ॥
साक्षिभिर्लिखितैर्भोगैश्छलैर्भूतैश्च मानुषान् ।
स्वानुत्पादितसंप्राप्तव्यवहारान् विचिंत्य च ॥(९७")॥
दिव्यसंसाधनाद्वापि केषु किं साधनं परं ।
युक्तिप्रत्यक्षानुमानोपमानैर्लोकशास्त्रतः ॥(९८")॥
वहुसन्मतसंसिद्धान् विनिश्चित्य सभास्थितः ।
ससभ्यः प्राड्विवाकस्तु नृपं संवोधयेत् सदा ॥ ९९" ॥
वर्तमानाश्च प्राचीना धर्माः के लोकसंश्रिताः ।
शास्त्रेषु के समुद्दिष्टा विरुध्यंते च केऽधुना ॥(१००")॥
लोकशास्त्रविरुद्धाः के पंडितस्तान् विचिंत्य च ।
नृपं संवोधयेत् तैश्च परत्रेह सुखप्रदैः ॥ १०१" ॥
इयच्च संचितं द्रव्यं वत्सरेऽस्मिन्नृणादिकं ।
व्ययीभूतमियच्चैव शेषं स्थावरजंगमं ।
इयदस्तीति वै राज्ञे सुमंत्रो विनिवेदयेत् ॥ १०३ ॥
पुराणि च कति ग्रामा अरण्यानि च संति हि ।
कर्षिता कति भूः केन प्राप्तो भागस्ततः कति ॥(१०४)॥
भागशेषं स्थितं कस्मिन् कत्यकृष्टा च भूमिका ।
भागद्रव्यं वत्सरेऽस्मिन् शुल्कदंडादिजं कति ॥(१०५)॥

अकृष्टपच्यं कति च कति चारण्यसंभवं ।
कति चाकरसंजातं निधिप्राप्तं कतीति च ॥(१०६)॥
अस्वामिकं कति प्राप्तं नाष्टिकं तस्कराहृतं ।
संचितं तु विनिश्चित्यामात्यो राज्ञे निवेदयेत् ॥ १०७ ॥
समासाल्लक्षणं कृत्यं प्रधानदशकस्य च ।
उक्तं तद्विस्तरैस्सर्वं विद्यात् तदनुदर्शिभिः ॥ १०८ ॥
परिवर्त्य नृपो ह्येतान् युंज्यादन्योऽन्यकर्मणि ॥ १०८ ॥
न कुर्यात् स्वाधिकबलान् कदापि ह्यधिकारिणः ।
परस्परं समबलाः कार्याः प्रकृतयो दश ॥ १०९ ॥
एकस्मिन्नधिकारे तु पुरुषाणां त्रयं सदा ।
नियुंजीत प्राज्ञतमं मुख्यमेकं तु तेषु वै ॥(११०)॥
द्वौ दर्शकौ तु तत्कार्ये हायनैस्तान्निवर्तयेत् ।
त्रिभिर्वा पंचभिर्वापि सप्तभिर्दशभिश्च वा ॥ १११ ॥
दृष्ट्वा तत्कार्यकौशल्यं तथा तं परिवर्तयेत् ।
नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥ ११२ ॥
अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् ।
अधिकारमदं पीत्वा को न मुह्येत् पुनश्चिरं ॥ ११३ ॥
अतः कार्यक्षमं दृष्ट्वा कार्येऽन्यं तं नियोजयेत् ।
तत्कार्ये कुशलं चान्यं तत्पदानुगतं खलु ॥(११४)॥
नियोजयेद्वर्तने तु तदभावे तथापरं ।
तद्गुणो यदि तत्पुत्रस्तत्कार्ये तं नियोजयेत् ॥ ११५ ॥
यथा यथा श्रेष्ठपदे ह्यधिकारी यदा भवेत् ।
अनुक्रमेण संयोज्यो ह्यंते तं प्रकृतिं नयेत् ॥ ११६ ॥

अधिकारबलं दृष्ट्वा योजयेद्दर्शकान् बहून् ।
अधिकारिणमेकं वा योजयेद्दर्शकैर्विना ॥११७॥
ये चान्ये कर्मसचिवास्तान् सर्वान् विनियोजयेत् ।
गजाश्वरथपादातपशूष्ट्रमृगपक्षिणां ॥(११८)॥
सुवर्णरत्नरजतवस्त्राणामधिपान् पृथक् ।
वित्तानामधिपं धान्याधिपं पाकाधिपं तथा ॥(११९)॥
आरामाधिपतिं चैव सौधगेहाधिपं पृथक् ।
संभारपं देवतुष्टिपतिं दानपतिं सदा ॥(१२०)॥
साहसाधिपतिं चैव ग्रामनेतारमेव च ।
भागहारं तृतीयं तु लेखकं च चतुर्थकं ।
शुल्कग्राहं पञ्चमं च प्रतिहारं तथैव च ॥ १२२ ॥
षट्कमेतन्नियोक्तव्यं ग्रामे ग्रामे पुरे पुरे ॥ १२२ ॥
तपस्विनो दानशीलाश्श्रुतिस्मृतिविशारदाः ।
पौराणिकाश्शास्त्रविदो दैवज्ञा मांत्रिकाश्च ये ॥(१२३)॥
आयुर्वेदविदः कर्मकाण्डज्ञास्तांत्रिकाश्च ये ।
ये चान्ये गुणिनश्श्रेष्ठा बुद्धिमन्तो जितेन्द्रियाः ॥(१२४)॥
तान् सर्वान् पोषयेद्भृत्या दानैर्मानैस्सुपूजितान् ।
हीयते चान्यथा राजा ह्यकीर्तिं चापि विंदति ॥ १२५ ॥
बहुसाध्यानि कार्याणि तेषामप्यधिपांस्तथा ।
तत्तत्कार्येषु कुशलान् ज्ञात्वा तांस्तु नियोजयेत् ॥ १२६ ॥
अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधं ।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १२७ ॥
भद्रादिजातिभेदं गजानां च चिकित्सितं ।

शिक्षां व्याधिं पोषणं च तालुजिह्वानखैर्गुणान् ।
आरोहणं गतिं वेत्ति स योज्यो गजरक्षणे ॥ १२८ ॥
तथाविधाधोरणस्तु हस्तिहृदयहारकः ॥ १२९ ॥
अश्वानां हृदयं वेत्ति जातिवर्णभ्रमैर्गुणान् ।
गतिं शिक्षां चिकित्सां च सत्त्वं सारं रुजं तथा ॥(१३०)॥
हिताहितं पोषणं च मानं यानं दतो वयः ।
शूरश्च व्यूहवित् प्राज्ञः कार्योऽश्वाधिपतिश्च सः ॥ १३१ ॥
एभिर्गुणैश्च संयुक्तो धुर्यान् युग्यांश्च वेत्ति यः ।
रथस्य सारं गमनं भ्रमणं परिवर्तनं ॥(१३२)॥
समापतत्सुशस्त्रास्त्रलक्ष्यसंधाननाशकः ।
रथगत्या स रथपो हयसंयोगगुप्तिवित् ॥ १३३ ॥
सादिनश्च तथा कार्याश्शूरा व्यूहविशारदाः ।
वाजिगतिविदः प्राज्ञाश्शस्त्रास्त्रैर्युद्धकोविदाः ॥ १३४ ॥
चक्रितं रेचितं वल्गितकं धौरितमाप्लुतं ।
तुरं मंदं च कुटिलं सर्पणं परिवर्तनं ॥(१३५)॥
एकादशास्कंदितं च गतीरश्वस्य वेत्ति यः ।
यथाबलं यथार्थं च शिक्षयेत् स च शिक्षकः ॥ १३६ ॥
वाजिसेवासु कुशलः पल्याणादिनियोगवित् ।
दृढांगश्च तथा शूरस्स कार्यो वाजिसेवकः ॥ १३७ ॥
नीतिशस्त्रास्त्रव्यूहादिनतिविद्याविशारदाः ।
अबाला मध्यवयसश्शूरा दांता दृढांगकाः ॥(१३८)॥
स्वधर्मनिरता नित्यं स्वामिभक्ता रिपुद्विषः ।
शूद्रा वा क्षत्रिया वैश्या म्लेच्छास्संकरसंभवाः ॥(१३९)॥
सेनाधिपास्सैनिकाश्च कार्या राज्ञा जयार्थिना ॥ १४० ॥

पञ्चानामथवा षण्णामधिपः पदगामिनां ।
योज्यस्स पत्तिपालस्स्यात्त्रिंशतां गौल्मिकस्स्मृतः ॥ १४१ ॥
शतानां तु शतानीकस्तथानुशातिको वरः ।
सेनानीर्लेखकश्चैते शतं प्रत्यधिपा इमे ॥ १४२ ॥
साहस्रिकस्तु संयोज्यस्तथा चायुतिको महान् ॥ १४२ ॥
व्यूहाभ्यासं शिक्षयेद्यस्सायंप्रातस्तु सैनिकान् ।
जानाति स शतानीकस्सुयोद्धुं युद्धभूमिकां ॥ १४३ ॥
तथाविधोऽनुशातिकश्शतानीकस्य साधकः ।
जानाति युद्धसंभारं कार्ययोग्यं च सैनिकं ॥ १४४ ॥
निदेशयति कार्याणि सेनानीर्यामिकांश्च सः ।
परिवृत्तिं यामिकानां करोति स च पत्तिपः ॥ १४५ ॥
सावधानं यामिकानां विजानीयाच्च गुल्मपः ॥ १४६ ॥
सैनिकाः कति संत्येतैः कति प्राप्तं तु वेतनं ।
प्राचीनाः के कुत्र गताश्चैतान् वेत्ति स लेखकः ॥ १४७ ॥
गजाश्वानां विंशतेश्चाधिपो नायकसंज्ञकः ।
उक्तसंज्ञान् स्वस्वचिह्नैर्लाञ्छितांश्च नियोजयेत् ॥ १४८ ॥
अजाविगोमहिष्येणमृगाणामधिपाश्च ये ।
तद्वृद्धिपुष्टिकुशलास्तद्वात्सल्यनिपीडिताः ।
तथाविधा गजोष्ट्रादेर्योज्यास्तत्सेवका अपि ॥ १४९ ॥
युद्धप्रवृत्तिकुशलास्तित्तिरादेश्च पोषकाः ।
शुकादेः पाठकास्सम्यक् श्येनादेः पातबोधकाः ।
तत्तद्धृदयविज्ञानकुशलाश्च सदा हि ते ॥ १५१ ॥
मानाकृतिप्रभावर्णजातिसाम्याच्च मौल्यवित् ।
रत्नानां स्वर्णरजतमुद्राणामधिपश्च सः ॥ १५२ ॥

दांतस्तु सधनो यस्तु व्यवहारविशारदः।
धनप्राणोऽतिकृपणः कोशाध्यक्षस्स एव हि ॥ १५३ ॥
देशभेदैर्जातिभेदैस्स्थूलसूक्ष्मबलाबलैः।
कौशेयादेर्मानमूल्यवेत्ता वस्त्रस्य वस्त्रपः ॥ १५४ ॥
कुटीकंचुकनेपथ्यमण्डपादेः परिक्रियां।
प्रमाणतस्सौचिकेन रंजनानि च वेत्ति यः ॥(१५५)॥
तथा शय्यादिसन्धानं वितानादेर्नियोजनं।
वस्त्रादीनां च स प्रोक्तो वितानाद्यधिपः खलु ॥ १५६ ॥
जातिं तुलां च मौल्यं च सारं भोगं परिग्रहं।
संमार्जनं च धान्यानां विजानाति स धान्यपः ॥ १५७ ॥
धौताधौतविपाकज्ञो रससंयोगभेदवित्।
क्रियासु कुशलो द्रव्यगुणवित् पाकनायकः ॥ १५८ ॥
फलपुष्पवृद्धिहेतुं रोपणं शोधनं तथा।
पादपानां यथाकालं कर्तुं भूमिजलादिना।
तद्वेपजं च संवेत्ति ह्यारामाधिपतिश्च सः ॥ १५९ ॥
प्रासादं परिखां दुर्गं प्राकारं प्रतिमां तथा।
यंत्राणि सेतुबंधं च वापिं कूपं तडागकं ॥(१६०)॥
तथा पुष्करिणीं कुंडं जलाद्यूर्ध्वगतिक्रियां।
सुशिल्पशास्त्रतस्सम्यक् सुरम्यं तु यथा भवेत्।
कर्तुं जानाति यस्सैव गृहाद्याधिपतिस्स्मृतः ॥ १६२ ॥
राजकार्योपयोग्यान् हि पदार्थान् वेत्ति तत्त्वतः।
संचिनोति यथाकाले संभाराधिप उच्यते ॥ १६३ ॥
स्वधर्माचरणे दक्षो देवताराधने रतः।
निस्पृहस्स च कर्तव्यो देवतुष्टिपतिस्सदा ॥ १६४ ॥

याचकं विमुखं नैव करोति न च संग्रहं।
दानशीलश्च निर्लोभो गुणज्ञश्च निरालसः ॥(१६५)॥
दयालुर्मृदुवाग्दानपात्रविन्नतितत्परः।
नित्यमेभिर्गुणैर्युक्तो दानाध्यक्षः प्रकीर्तितः ॥ १६६ ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः।
रिपौ मित्रे समा ये च धर्मज्ञास्सत्यवादिनः ॥(१६७)॥
निरालसा जितक्रोधकामलोभाः प्रियंवदाः।
सभ्यास्सभासदः कार्या वृद्धास्सर्वासु जातिषु ॥ १६८ ॥
सर्वभूतात्मतुल्यो यो निस्पृहोऽतिथिपूजकः।
दानशीलश्च यो नित्यं सैव सत्राधिपस्स्मृतः ॥ १६९ ॥
परोपकारनिरतः परमर्माप्रकाशकः।
निर्मत्सरो गुणग्राही तद्विधस्स्यात् परीक्षकः ॥ १७० ॥
प्रजा नष्टा न हि भवेत् तथा दंडविधायकः।
नातिक्रूरो नातिमृदुस्साहसाधिपतिश्च सः ॥ १७१ ॥
आधर्षकेभ्यश्चोरेभ्यो ह्यधिकारिगणात् तथा।
प्रजासंरक्षणे दक्षो ग्रामपो मातृपितृवत् ॥ १७२ ॥
वृक्षान् संपुष्य यत्नेन फलं पुष्पं विचिन्वति।
मालाकार इवात्यंतं भागहारस्तथाविधः ॥ १७३ ॥
गणनाकुशलो यस्तु देशभाषाप्रभेदवित्।
असंदिग्धमगूढार्थं विलिखेत् स च लेखकः ॥ १७४ ॥
शस्त्रास्त्रकुशलो यस्तु दृढांगश्च निरालसः।
यथायोग्यं समाहूयात् प्रनम्रः प्रतिहारकः ॥ १७५ ॥
यथा विक्रयिणां मूलधननाशो भवेन्न हि।
तथा शुल्कं तु हरति शौल्किकस्स उदाहृतः ॥ १७६ ॥

उपोपवासनियमकर्मध्यानरतस्सदा ।
दांतः क्षमी निस्पृहश्च तपोनिष्टस्स उच्यते ॥ १७७ ॥
याचकेभ्यो ददात्यर्थं भार्यापुत्रादिकं त्वपि ।
न संगृह्णाति यत्किंचिद्दानशीलस्स उच्यते ॥ १७८ ॥
पठनं पाठनं कर्तुं क्षमास्त्वभ्यासशालिनः ।
श्रुतिस्मृतिपुराणानां श्रुतज्ञास्ते प्रकीर्तिताः ॥ १७९ ॥
साहित्यशास्त्रनिपुणस्संगीतज्ञश्च सुस्वरः ।
सर्गादिपंचकज्ञाता स वै पौराणिकस्स्मृतः ॥ १८० ॥
मीमांसातर्कवेदान्तशब्दशासनतत्परः ।
ऊहवान् बोधितुं शक्तस्तत्त्वतश्शास्त्रविच्च सः ॥ १८१ ॥
संहितां च तथा होरां गणितं वेत्ति तत्त्वतः ।
ज्योतिर्विच्च स विज्ञेयो त्रिकालज्ञश्च यो भवेत् ॥ १८२ ॥
बीजानुपूर्व्या मंत्राणां गुणान् दोषांश्च वेत्ति यः ।
मन्त्रानुष्टानसंपन्नो मांत्रिकस्सिद्धदैवतः ॥ १८३ ॥
हेतुलिंगौषधीभिर्यो व्याधीनां तत्त्वनिश्चयं ।
साध्यासाध्यं विदित्वोपक्रमते स भिषक् स्मृतः ॥ १८४ ॥
श्रुतिस्मृतीतरैर्मन्त्रानुष्ठानैर्देवतार्चनं ।
कर्तुं हिततमं मत्वा यतते स च तान्त्रिकः ॥ १८५ ॥
नपुंसकास्सत्यवाचो सुभाषाश्च प्रियंवदाः ।
सुकुलाश्च सुरूपाश्च योज्यास्त्वंतःपुरे सदा ॥ १८६ ॥
अनन्यास्स्वामिभक्ताश्च धर्मनिष्ठा दृढांगकाः ।
अबाला मध्यवयसस्सेवासु कुशलास्सदा ॥(१८७)॥
सर्वं यद्यत् कार्यजातं नीचं वा कर्तुमुद्यताः ।
निदेशकारिणो राज्ञा कर्तव्याः परिचारकाः ॥ १८८ ॥

शत्रुप्रजाभृत्यवृत्तं विज्ञातुं कुशलाश्च ये ।
ते गूढचाराः कर्तव्या यथार्थश्रुतबोधकाः ॥ १८९ ॥
राज्ञस्समीपप्राप्तानां नतिस्थानविबोधकाः ।
दंडधारा वेत्रधाराः कर्तव्यास्ते सुशिक्षकाः ॥ १९० ॥
तन्त्रीकंठोत्थितान् सप्त स्वरान् स्थानविभागतः ।
उत्पादयति संवेत्ति ससंयोगविभागिनः ॥(१९१)॥
अनुरागं सुस्वरं च सतालं च प्रगायति ।
सनृत्यं वा गायकानामधिपस्स च कीर्तितः ॥ १९२ ॥
तथाविधा च पण्यस्त्री निर्लज्जा भावसंयुता ।
शृङ्गाररसतत्वज्ञा सुंदरांगी मनोरमा ।
नवीनोत्तुंगकठिनकुचा सुस्मितदर्शिनी ॥ १९३ ॥
ये चान्ये साधकास्ते च तथा चित्तविरंजकाः ।
सुभृत्यास्तेऽपि संधार्या नृपेणात्महिताय च ॥ १९४ ॥
वैतालिकास्सुकवयो वेत्रदण्डधराश्च ये ।
शिल्पज्ञाश्च कलावंतो ये सदाप्युपकारकाः ॥(१९५)॥
दुर्गुणासूचका भाणा नर्तका बहुरूपिणः ।
आरामकृत्रिमवनकारिणो दुर्गकारिणः ॥(१९६)॥
महानालिकयंत्रस्थगोलैर्लक्ष्यविभेदिनः ।
लघुयन्त्राग्नेयचूर्णबाणगोलासिकारिणः ॥(१९७)॥
अनेकयंत्रशस्त्रास्त्रधनुस्तूणादिकारकाः ।
स्वर्णरत्नाद्यलंकारघटका रथकारिणः ॥(१९८)॥
पाषाणघटका लोहकारा धातुविलेपकाः ।
कुंभकाराश्शौल्विकाश्च तक्षाणो मार्गकारकाः ॥(१९९)॥
नापिता रजकाश्चैव वाशिका मलहारकाः ।

वार्ताहरास्सौचिकाश्च राजचिह्नाग्रधारिणः ॥(२००)॥
भेरीपटहगोपुच्छशंखवेण्वादिनिस्वनैः।
ये व्यूहरचका यानव्यपयानादिबोधकाः ॥(२०१)॥
नाविकाः खनका व्याधाः किराता भारिका अपि।
शस्त्रसंमार्जनकरा जलधान्यप्रवाहकाः ॥(२०२)॥
आपणिकाश्च गणिका वाद्यजायाप्रजीविनः।
तंतुवायाश्शाकुनिकाश्चित्रकाराश्च चर्मकाः ॥(२०३)॥
गृहसंमार्जकाः पात्रधान्यवस्त्रप्रमार्जकाः।
शय्यावितानास्तरणकारकाश्शासका अपि ॥(२०४)॥
आमोदास्वेदसङ्कूपकारास्तांबूलिकास्तथा।
हीनाल्पकर्मिणश्चैते योज्याः कार्यानुरूपतः ॥ २०५ ॥
प्रोक्तं पुण्यतमं सत्यं परोपकरणं तथा।
आभ्यां युक्तांश्च भृतकान् सततं धारयेन्नृपः ॥ २०६ ॥
हिंसा गरीयसी सर्वपापेभ्योऽनृतभाषणं।
गरीयस्तरमेताभ्यां युक्तान् भृत्यान् न धारयेत् ॥ २०७ ॥
यदा यदुचितं कर्तुं वक्तुं वा तत्प्रबोधयन्।
तद्वक्ति कुरुते द्राक् तु स सद्भृत्यस्सुपूज्यते ॥ २०८ ॥
उत्थाय पश्चिमे यामे गृहकृत्यं विचिंत्य च।
कृत्वोत्सर्गं तु विष्णुं हि स्मृत्वा स्नायादनंतरं ॥ २०९ ॥
प्रातः कृत्यं तु निर्वर्त्य यावत् सार्धमुहूर्तकं।
गत्वा स्वकार्यशालां वा कार्याकार्यं विचिंत्य च ॥(२१०)॥
विनाज्ञया विशंतं तु द्वास्थस्सम्यङ्निरोधयेत्।
निदेशकार्यं विज्ञाप्य तेनाज्ञप्तः प्रमोचयेत् ॥ २११ ॥
दृष्ट्वागतान् सभामध्ये राज्ञे दंडधरः क्रमात्।

निवेद्य तन्नतीः पश्चात् तेषां स्थानानि सूचयेत् ॥ २१२ ॥
ततो राजगृहं गत्वाज्ञप्तो गच्छेच्च संनिधिं।
नत्वा नृपं यथान्यायं विष्णुरूपमिवापरं ॥ २१३ ॥
प्रविश्य सानुरागस्य चित्तज्ञस्य समंततः।
भर्तुरर्धासने दृष्टिं कृत्वा नान्यत्र निक्षिपेत् ॥ २१४ ॥
अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः।
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरं ॥(२१५)॥
यत्नेनोपचरेन्नित्यं नाहमस्मीति चिंतयेत्।
समर्थयन् च तत्पक्षं साधु भाषेत भाषितं।
तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितं ॥ २१७ ॥
सुखप्रबंधगोष्ठीषु विवादे वादिनां मतं।
विजानन्नपि नो ब्रूयाद्भर्तुः क्षिप्तोत्तरं वचः ॥ २१८ ॥
सदानुद्धतवेषस्स्यान्नृपाहूतस्तु प्रांजलिः।
तद्वां कृतनतिश्श्रुत्वा वस्त्रांतरितसंमुखः ॥ २१९ ॥
तदाज्ञां धारयित्वादौ स्वकर्माणि निवेदयेत्।
नत्वासीतासने प्रह्वस्तत्पार्श्वे संमुखो ज्ञया ॥ २२० ॥
उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा।
जृंभणं गात्रभंगं च पर्वास्फोटं च वर्जयेत् ॥ २२१ ॥
राज्ञादिष्टं तु यत्स्थानं तत्र तिष्ठेन्मुदान्वितः।
प्रवीणोचितमेधावी वर्जयेदभिमानतां ॥ २२२ ॥
आपद्युन्मार्गगमने कार्यकालात्ययेषु च।
अपृष्टोऽपि हितान्वेषी ब्रूयात् कल्याणभाषितं ॥ २२३ ॥
प्रियं तथ्यं च पथ्यं च वदेद्धर्मार्थिकं वचः।
समानवार्तया चापि तद्धितं बोधयेत् सदा ॥ २२४ ॥

कीर्तिमन्यनृपाणां वा वदेन्नीतिफलं तथा।
दाता त्वं धार्मिकश्शूरो नीतिमानसि भूपते ॥(२२५)॥
अनीतिस्ते तु मनसि वर्तते न कदाचन।
ये ये भ्रष्टा अनीत्या तान् तदग्रे कीर्तयेत् सदा ॥ २२६ ॥
नृपेभ्यो ह्यधिकोऽसीति सर्वेभ्यो न विशेषयेत्।
परार्थं देशकालज्ञो देशे काले च साधयेत् ॥ २२७ ॥
परार्थनाशनं न स्यात् तथा ब्रूयात् सदैव हि।
न कर्षयेत् प्रजाकार्यमिपतश्च नृपं सदा ॥ २२८ ॥
अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा।
न त्वेवानर्थसंपन्नां वृत्तिमीहेत पंडितः ॥ २२९ ॥
यत्कार्ये यो नियुक्तस्स भूयात् तत्कार्यतत्परः।
नान्याधिकारमान्विच्छेन्नाभ्यसूयेच्च केनचित् ॥ २३० ॥
न न्यूनं लक्षयेत् कस्य पूरयेत स्वशक्तितः।
परोपकरणादन्यन्न स्यान्मित्रकरं सदा ॥ २३१ ॥
करिष्यामीति ते कार्यं न कुर्यात् कार्यलंबनं।
द्राक् कुर्यात् तु समर्थश्चेत् साशं दीर्घं न रक्षयेत् ॥ २३२ ॥
गुह्यं कर्म च मंत्रं च न भर्तुस्संप्रकाशयेत्।
विद्वेषं च विनाशं च मनसापि न चिंतयेत् ॥ २३३ ॥
राजा परमामित्रोऽस्ति न कामं विचरेदिति।
स्त्रीभिस्तदर्थिभिः पापैर्वैरिभूतैर्निराकृतैः ॥(२३४)॥
एकार्थचर्यां साहित्यं संसर्गं च विवर्जयेत्।
वेषभाषानुकरणं न कुर्यात् पृथिवीपतेः ॥ २३५ ॥
संपन्नोऽपि च मेधावी न स्पर्धेत च तद्गुणैः।
रागापरागौ जानीयाद्भर्तुः कुशलकर्मवित्।

[इंगिताकारचेष्टाभ्यस्तदभिप्रायतां तथा ॥ २३६[II]॥
त्यजेद्विरक्तं नृपतिं रक्ते वृत्तिं तु कारयेत् ॥ २३७ ॥
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा।
आशावर्धनकं कृत्वा फलनाशं करोति च ॥ २३८ ॥
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः।
वाक्यं च समदं वक्ति वृत्तिच्छेदं करोति च ॥ २३९ ॥
लक्ष्यते विमुखश्चैव गुणसंकीर्तिने कृते।
दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्मणि ॥ २४० ॥
विरक्तलक्षणं ह्येतद्रक्तस्य लक्षणं ब्रुवे ॥ २४०[II] ॥
दृष्ट्वा प्रसन्नो भवति वाच्यं गृह्णाति चादरात्।
कुशलादिपरिप्रश्नी प्रदापयति चासनं ॥(२४१[II])॥
विविक्तदर्शनं चास्य रहस्येनं न शंकते।
ज्ञायेत हृष्टवदनश्श्रुत्वा तस्य च तत्कथां ॥ २४२[II] ॥
अप्रियाण्यपि चान्यानि तद्युक्तान्यभिमन्यते।
उपायनं च गृह्णाति स्तोकं संपादनैस्तथा।
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ॥ २४४ ॥
इति रक्तस्य वै लक्ष्यं कर्तव्यं तस्य सेवनं।]
तद्दत्तवस्त्रभूषादिचिह्नं संधारयेत् सदा ॥ २४५ ॥
न्यूनाधिक्यं स्वाधिकारकार्ये नित्यं निवेदयेत्।
तदर्थो तत्कृतां वार्तां शृणुयाद्वापि कीर्तयेत् ॥ २४६ ॥
चारसूचकदोषेण त्वन्यथा यद्वदेन्नृपः।
शृणुयान्मौनमाश्रित्य तथ्यवन्नानुमोदयेत् ॥ २४७ ॥
आपद्गतं सुभर्तारं कदापि न परित्यजेत् ॥ २४७[II]॥
एकवारमप्याशितं यस्यान्नं ह्यादरेण च।

तदिष्टं चिंतयेन्नित्यं पालकस्यांनसा न किं ॥ २८८ ॥
अप्रधानः प्रधानस्स्यात् काले चात्यंतसेवनात् ।
प्रधानोऽप्यप्रधानस्स्यात् सेवालस्यादिना यतः ॥ २८९ ॥
नित्यं संसेवनरतो भृत्यो राज्ञः प्रियो भवेत् ।
स्वस्वाधिकारकार्यं यद्द्राक् कुर्यात् सुमना यतः ॥ २९० ॥
न कुर्यात् सहसा कार्यं नीचं राजापि नो दिशेत् ॥ २९१ ॥
तत्कार्यकारकाभावे राज्ञः कार्यं सदैव हि ।
काले यदुचितं कर्तुं नीचमप्युत्तमोऽर्हति ॥ २९२ ॥
यस्मिन् प्रीतो भवेद्राजा तदनिष्टं न चिंतयेत् ।
न दर्शयेत् स्वाधिकारगौरवं तु कदाचन ॥ २९३ ॥
परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुः कदा ।
राज्ञा चाधिकृतास्संतो स्वस्वाधिकारगुप्तये ॥ २९४ ॥
अधिकारिगणो राजा सद्वृत्तौ यत्र निष्ठतः ।
उभौ तत्र स्थिरा लक्ष्मीर्विपुला संमुखी भवेत् ॥ २९५ ॥
अन्याधिकारवृत्तं तु न ब्रूयाच्छ्रुतमप्युत ।
राजा न शृणुयादन्यमुखतस्तु कदाचन ॥ २९६ ॥
न बोधयन्ति च हितमहितं चाधिकारिणः ।
प्रच्छन्नवैरिणस्ते तु दास्यरूपमुपाश्रिताः ॥ २९७ ॥
हिताहितं न शृणोति राजा मंत्रिमुखाच्च यः ।
स दस्यू राजरूपेण प्रजानां धनहारकः ॥ २९८ ॥
सुपुष्टव्यवहारा ये राजपुत्रैश्च मंत्रिणः ।
विरुध्यन्ति च तैस्साकं ते तु प्रच्छन्नतस्कराः ॥ २९९ ॥
बाला अपि राजपुत्रा नावमान्यास्तु मंत्रिभिः ।
सदा सुमृदुवचनैस्संबोध्यास्ते प्रयत्नतः ॥ ३०० ॥

असदाचरितं तेषां क्वचिद्राज्ञे न दर्शयेत् ।
स्त्रीपुत्रमोहो बलवान् तयोर्निंदा न श्रेयसे ॥ २६१ ॥
राज्ञोऽवश्यतरं कार्यं प्राणसंशयितं च यत् ।
आज्ञापयाग्रतश्चाहं करिष्ये तत्तु निश्चितं ॥(२६२)॥
इतिविज्ञाप्य द्राक् कर्तुं प्रयतेत स्वशक्तितः ।
प्राणानपि च संदद्यान्महत्कार्ये नृपाय च ॥(२६३)॥
भृत्यः कुटुंबपुष्ट्यर्थं नान्यथा तु कदाचन ।
भृत्या धनहरास्सर्वे युक्त्या प्राणहरो नृपः ॥ २६४ ॥
युद्धादौ सुमहत्कार्ये भृत्या प्राणान् हरेन्नृपः ।
नान्यथा भृतिरूपेण भृत्यो राजधनं हरेत् ॥ २६५ ॥
अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ ।
राजा सयुवराजस्तु मान्योऽमात्यादिकैस्सदा ॥ २६६ ॥
तन्न्यूनामात्यनवकं तन्न्यूनाधिकृतो गणः ।
मंत्रितुल्यश्चायुतिको न्यूनसाहस्रिको मतः ॥ २६७ ॥
न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् ।
नावमान्या राजपत्नी कन्या ह्यपि च मंत्रिभिः ॥ २६८ ॥
राजसंबंधिनः पूज्यास्सुहृदश्च यथार्हतः ।
नृपाहूतस्तुरं गच्छेत् त्यक्त्वा कार्यशतं महत् ॥ २६९ ॥
मित्रायापि न वक्तव्यं राजकार्यं सुमंत्रितं ।
भृतिं विना राजद्रव्यमदत्तं नाभिलाषयेत् ॥ २७० ॥
राजाज्ञया विना नेच्छेत् कार्यमाध्यास्थिकीं भृतिं ।
न निहन्याद्द्रव्यलोभात् सत्कार्यं यस्य कस्यचित् ॥ २७१ ॥
स्वस्त्रीपुत्रधनप्राणैः काले संरक्षयेन्नृपं ।
उत्कोचं नैव गृह्णीयान्नान्यथा बोधयेन्नृपं ॥ २७२ ॥

अन्यथा दंडकं भूपं नित्यं प्रबलदंडकं।
निगृह्य बोधयेत् सम्यगेकांते राज्यगुप्तये ॥ २७३ ॥
हितं राज्ञश्चाहितं यल्लोकानां तन्न कारयेत्।
नवीनकरशुल्काद्यैर्लोक उद्विजते ततः ॥ २७४ ॥
गुणनीतिवलद्वेषी कुलभूतोऽप्यधार्मिकः।
नृपो यदि भवेत् तं तु त्यजेद्राष्ट्रविनाशकं ॥ २७५ ॥
तत्पदे तस्य कुलजं गुणयुक्तं पुरोहितः।
प्रकृत्यनुमतिं कृत्वा स्थापयेद्राज्यगुप्तये ॥ २७६ ॥
सास्त्रो दूरं नृपात् तिष्ठेदस्त्रपाताद्बहिस्सदा।
सशस्त्रो दशहस्तं तु यथादिष्टं नृपप्रियाः ॥ २७७ ॥
पञ्चहस्तं वसेयुर्वै मन्त्रिणो लेखकास्सदा।
सेनपैस्तु विना नैव सशस्त्रास्त्रो विशेत् सभां ॥ २७८ ॥
पुरोहितश्श्रेष्ठतरश्श्रेष्ठस्सेनापतिस्स्मृतः।
समस्सुहृच्च संवन्धी ह्युत्तमा मन्त्रिणस्स्मृताः ॥ २७९ ॥
अधिकारिगणो मध्योऽधमौ दर्शकलेखकौ।
ज्ञेयोऽधमतमो भृत्यः परिचारगणस्सदा ॥ २८० ॥
परिचारगणान्न्यूनो विज्ञेयो नीचसाधकः ॥ २८०[1] ॥
पुरोगमनमुत्थानं स्वासने सन्निवेशनं ।
कुर्यात् स कुशलप्रश्नं क्रमात् सुस्मितदर्शनं ॥(२८१[1])॥
राजा पुरोहितादीनां त्वन्येपां स्नेहदर्शनं।
अधिकारिगणादीनां सभास्थश्च निरालसः ॥(२८२[1])॥
विद्यावत्सु शरच्चंद्रो निदाघार्को द्विपत्सु च।
प्रजासु च वसन्तार्क इव स्यात् त्रिविधो नृपः ॥ २८३[1] ॥
यदि ब्राह्मणभिन्नेपु मृदुत्वं धारयेन्नृपः।

परिभवन्ति तं नीचा यथा हस्तिपका गजं ॥ २८४ ॥
भृत्याद्यैर्यन्न कर्तव्याः परिहासाश्च क्रीडनं।
अपमानास्पदे ते तु राज्ञो नित्यं भयावहे ॥ २८५ ॥
पृथक् पृथग्व्यापयन्ति स्वार्थसिध्यै नृपाय ते।
स्वकार्यं गुणवत् कृत्वा सर्वे स्वार्थपरा यतः ॥(२८६)॥
विकल्पंतेऽवमन्यंति लंघयन्ति च तद्वचः।
राजभोज्यानि भुंजन्ति न तिष्ठंति स्वके पदे ॥(२८७)॥
विस्रंसयंति तन्मन्त्रं विवृण्वंति च दुष्कृतं।
भवन्ति नृपवेषा हि वञ्चयन्ति नृपं सदा ॥(२८८)॥
तत्स्त्रियं सज्जयंति स्म राज्ञि क्रुद्धे हसन्ति च।
व्याहरन्ति च निर्लज्जा हेलयन्ति नृपं क्षणात्।
आज्ञामुल्लंघयन्ति स्म न भयं यांत्यकर्मणि ॥ २९० ॥
एते दोषाः परीहासक्षमाक्रीडोद्भवा नृपे ॥२९०॥
न कार्यं भृतकः कुर्यान्नृपलेखाद्विना क्वचित्।
नाज्ञापयेल्लेखनेन विनाल्पं वा महन्नृपः ॥२९१॥
भ्रांतेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परं।
अलेख्यमाज्ञापयति ह्यलेख्यं यत् करोति यः ॥(२९२)॥
राजकृत्यमुभौ चोरौ तौ भृत्यनृपती सदा।
नृपसंचिह्नितं लेख्यं नृपस्तन्न नृपो नृपः ॥ २९३ ॥
समुद्रलिखितं राज्ञा लेख्यं तच्चोत्तमोत्तमं।
उत्तमं राजलिखितं मध्यं मंत्र्यादिभिः कृतं।
पौरलेख्यं कनिष्ठं स्यात् सर्वं संसाधनक्षमं ॥ २९५ ॥
यस्मिन् यस्मिन् हि कृत्ये तु राज्ञा योऽधिकृतो नरः।
सामात्ययुवराजादिर्यथानुक्रमतश्च सः ॥ २९६ ॥

दैनिकं मासिकं वृत्तं वार्षिकं बहुवार्षिकं ।
तत्कार्यजातलेख्यं तु राज्ञे सम्यङ्निवेदयेत् ॥ २९७ ॥
राजाद्यंकितलेख्यस्य धारयेत् स्मृतिपत्रकं ।
कालेऽतीते विस्मृतिर्वा भ्रांतिस्सञ्जायते नृणां ॥ २९८ ॥
अनुभूतस्य स्मृत्यर्थं लिखितं निर्मितं पुरा ।
यत्नाच्च ब्रह्मणा वाचां वर्णस्वरविचिह्नितं ॥ २९९ ॥
वृत्तलेख्यं तथा चायव्ययलेख्यमिति द्विधा ।
व्यवहारक्रियाभेदादुभयं बहुतां गतं ॥ ३०० ॥
यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियं ।
सावधारणकं चैव जयपत्रकमुच्यते ॥ ३०१ ॥
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु यत् ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥ ३०२ ॥
ऋत्विक्पुरोहिताचार्यमन्येष्वभ्यर्चितेषु च ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥ ३०३ ॥
सर्वैं शृणुत कर्तव्यमाज्ञया मम निश्चितं ।
स्वहस्तकालसंपन्नं शासनं पत्रमेव तत् ॥ ३०४ ॥
देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिभिस्तुष्टः प्रसादलिखितं हि तत् ॥ ३०५ ॥
भोगपत्रं तु करदीकृतं चोपायनीकृतं ।
पुरुषावधिकं तत्तु कालावधिकमेव वा ॥ ३०६ ॥
विभक्ता ये च भ्रात्राद्यास्स्वरुच्या तु परस्परं ।
विभागपत्रं कुर्वंति भागलेख्यं तदुच्यते ॥ ३०७ ॥
गृहभूम्यादिकं दत्वा पत्रं कुर्यात् प्रकाशकं ।
अनुच्छेद्यमनाहार्यं दानलेख्यं तदुच्यते ॥ ३०८ ॥

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्यप्रमाणयुक् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥ ३०९ ॥
जङ्गमस्थावरं बन्धं कृत्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तं सादिलेख्यं तदुच्यते ॥ ३१० ॥
ग्रामो देशश्च यत्कुर्यात् सत्यलेख्यं परस्परं ।
राजाविरोधिधर्मार्थं संवित्पत्रं तदुच्यते ॥ ३११ ॥
वृध्या धनं गृहीत्वा तु कृतं वा कारितं च यत् ।
ससाक्षिमच्च तत् प्रोक्तमृणलेख्यं मनीषिभिः ॥ ३१२ ॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः ।
दत्तं लेख्यं साक्षिमद्यच्छुद्धिपत्रं तदुच्यते ॥ ३१३ ॥
मेलयित्वा स्वधनांशान् व्यवहाराय साधकाः ।
कुर्वंति लेखपत्रं यत् तच्च सामयिकं स्मृतं ॥ ३१४ ॥
सभ्याधिकारिप्रकृतिसभासद्भिर्न यः कृतः ।
तत्पत्रं वादिमान्यं चेज्ज्ञेयं सम्मतिसंज्ञिकं ॥ ३१५ ॥
स्वकीयवृत्तज्ञानार्थं लिख्यते यत् परस्परं ।
श्रीमङ्गलपदाद्यं वा सपूर्वोत्तरपक्षकं ॥(३१६)॥
असन्दिग्धमगूढार्थं स्पष्टाक्षरपदं सदा ।
अन्यव्यावर्तकस्वात्मपरपित्रादिनामयुक् ॥(३१७)॥
एकद्विबहुवचनैर्यथार्हस्तुतिसंयुतं ।
समामासतदर्धाहर्नामजात्यादिचिह्नितं ॥(३१८)॥
कार्यबोधिसुसंबन्धं नत्याशीर्वादपूर्वकं ।
स्वाम्यसेवकसेव्यार्थं क्षेमपत्रं तु तत् स्मृतं ॥ ३१९ ॥
एभिरेव गुणैर्युक्तं स्वाधर्पकविबोधकं ।
भाषापत्रं तु तज्ज्ञेयमथवा वेदनार्थकं ॥ ३२० ॥

प्रदर्शितं वृत्तलेख्यं समासाल्लक्षणान्वितं ।
समासात् कथ्यते चान्यच्छेषायव्ययबोधकं ॥ ३२१ ॥
व्याप्यव्यापकभेदैश्च मूल्यमानादिभिः पृथक् ।
विशिष्टसंज्ञितैस्ताद्धि यथार्थैर्बहुभेदयुक् ॥ ३२२ ॥
वत्सरे वत्सरे वापि मासि मासि दिने दिने ।
हिरण्यपशुधान्यादि स्वाधीनं त्वायसंज्ञकं ।
पराधीनं कृतं यत्तु व्ययसंज्ञं धनं च तत् ॥ ३२३ ॥
साद्यस्कश्चैव प्राचीन आयस्संचितसंज्ञकः ।
व्ययो द्विधा चोपभुक्तस्तथा विनिमयात्मकः ॥ ३२४ ॥
निश्चितान्यस्वामिकं चानिश्चितस्वामिकं तथा ।
स्वस्वत्वनिश्चितं चेति त्रिविधं संचितं मतं ॥ ३२५ ॥
निश्चितान्यस्वामिकं यद्धनं तु त्रिविधं हि तत् ।
औपनिध्यं याचितकमौत्तमर्णिकमेव च ॥ ३२६ ॥
विस्त्रंभान्निहितं सद्भिर्यदौपनिधिकं हि तत् ।
अवृद्धिकं गृहीतान्यालंकारादि च याचितं ॥ ३२७ ॥
सवृद्धिकं गृहीतं यदृणं तच्चौत्तमर्णिकं ।
निध्यादिकं च मार्गादौ प्राप्तमज्ञातस्वामिकं ॥ ३२८ ॥
साहजिकं चाधिकं च द्विधा स्वस्वविनिश्चितं ॥ ३२९ ॥
उत्पद्यते यो नियतो दिने मासि च वत्सरे ।
आयस्साहजिकस्सैव दायाद्यश्च स्ववृत्तितः ॥ ३३० ॥
दायः परिग्रहो यत्तु प्रकृष्टं तत् स्वभावजं ।
मौल्याधिक्यं कुसीदं च गृहीतं याजनादिभिः ॥ ३३१ ॥
पारितोष्यं भृतिप्राप्तं विजिताद्यं धनं च यत् ।
स्वस्वत्वेऽधिकसंज्ञं तदन्यत् साहजिकं स्मृतं ॥ ३३२ ॥

पूर्ववत्सरशेषं च वर्तमानाब्दसंभवं ।
स्वाधीनं संचितं द्वेधा धनं सर्वं प्रकीर्तितं ॥ ३३३ ॥
द्वेधाधिकं साहजिकं पार्थिवेतरभेदतः ।
भूमिभागसमुद्भूत आयः पार्थिव उच्यते ॥ ३३४ ॥
स देवकृत्रिमजलैर्देशग्रामपुरैः पृथक् ।
बहुमध्याल्पफलतो भिद्यते भूविभागतः ॥ ३३५ ॥
शुल्कदंडाकरकरभाटकोपायनादिभिः ।
इतरः कीर्तितस्तज्ज्ञैरायो लेखविशारदैः ॥ ३३६ ॥
यन्निमित्तो भवेदायो व्ययस्तन्नामपूर्वकः ।
व्ययश्चैवं समुद्दिष्टो व्याप्यव्यापकसंयुतः ॥ ३३७ ॥
पुनरावर्तकस्स्वत्वनिवर्तक इति द्विधा ।
व्ययो यन्निध्युपनिधीकृतो विनिमयीकृतः ॥ ३३८ ॥
सकुसीदाकुसीदाधमर्णकश्चावृत्तस्स्मृतः ।
निधिर्भूमौ विनिहितोऽन्यस्मिन्नुपनिधिस्स्थितः ॥ ३३९ ॥
दत्तमूल्यादिसंप्राप्तस्सैव विनिमयीकृतः ।
वृद्ध्यावृद्ध्या च यो दत्तस्स वै स्यादाधमर्णिकः ॥ ३४० ॥
सवृद्धिकमृणं दत्तमकुसीदं तु याचितं ।
स्वत्वनिवर्तको द्वेधा त्वैहिकः पारलौकिकः ॥ ३४१ ॥
प्रतिदानं पारितोष्यं वेतनं भोग्यमैहिकः ।
चतुर्विधस्तथा पारलौकिकोऽनंतभेदभाक् ॥ ३४२ ॥
शेषं संयोजयेन्नित्यं पुनरावर्तको व्ययः ।
मूल्यत्वेन च यद्दत्तं प्रतिदानं स्मृतं हि तत् ॥ ३४३ ॥
सेवाशौर्यादिसंतुष्टैर्दत्तं तत्पारितोषिकं ।
भृतिरूपेण संदत्तं वेतनं तत्प्रकीर्तितं ॥ ३४४ ॥

धान्यवस्त्रगृहारामगोगजादिरथार्थकं ।
विद्याराज्याद्यर्जनार्थं धनाद्यर्थं तथैव च ।
व्ययीकृतं रक्षणार्थमुपभोग्यं तदुच्यते ॥ ३४५' ॥
सुवर्णरत्नरजतनिष्कशालास्तथैव च ।
रथाश्वगोगजोष्ट्राजावीनशालाः पृथक् पृथक् ॥(३४६')॥
वाद्यशस्त्रास्त्रवस्त्राणां धान्यसंभारयोस्तथा ।
मंत्रिशिल्पनाट्यवैद्यमृगाणां पाकपक्षिणां ।
शाला भोग्ये निविष्टास्तु तद्व्ययो भोग्य उच्यते ॥ ३४८ ॥
जपहोमार्चनैर्दानैश्चतुर्धा पारलौकिकः ।
पुनर्यातो निवृत्तश्च विशेषायव्ययौ च तौ ॥ ३४९ ॥
आवर्तको निवर्ती च व्ययायौ तु पृथग्द्विधा ।
आवर्तकविहीनौ तु व्ययायौ लेखको लिखेत् ॥ ३५० ॥
क्रयाधमर्णघटनान्यस्थलाप्तो विवर्तकः ।
द्रव्यं लिखित्वा दद्यात् तु गृहीत्वा विलिखेत् स्वयं ॥ ३५१ ॥
हीयते वर्धते नैवमायव्ययविलेखकः ॥ ३५१'' ॥
हेतुप्रमाणसंबंधकार्याङ्गव्याप्यव्यापकैः ।
आयाश्च बहुधा भिन्ना व्ययाश्शेषं पृथक् पृथक् ।
मानेन संख्यया चैवोन्मानेन परिमाणकैः ॥ ३५३ ॥
क्वचित् संख्या क्वचिन्मानमुन्मानं परिमाणकं ।
समाहारः क्वचिच्चेष्टो व्यवहाराय तद्विदां ॥ ३५४ ॥
अंगुलाद्यं स्मृतं मानमुन्मानं तु तुला स्मृता ।
परिमाणं पात्रमानं संख्यैकद्व्यादिसंज्ञिका ॥ ३५५ ॥
यत्र यादृग्व्यवहारस्तत्र तादृक् प्रकल्पयेत् ॥ ३५५'' ॥
रजतस्वर्णताम्रादिव्यवहारार्थमुद्रितं ।

व्यवहार्यं वराटाद्यं रत्नान्तं द्रव्यमीरितं ॥ ३५६ ॥
सपशुधान्यवस्त्रादितृणांतं धनसंज्ञिकं ।
व्यवहारे चाधिकृतं स्वर्णाद्यं मूल्यतामियात् ॥ ३५७ ॥
कारणादिसमायोगात् पदार्थस्तु भवेद्भुवि ।
येन व्ययेन संसिद्धस्तद्व्ययस्तस्य मूल्यकं ॥ ३५८ ॥
सुलभासुलभत्वाच्चागुणत्वगुणसंश्रयैः ।
यथाकामात् पदार्थानामर्घं हीनाधिकं भवेत् ॥ ३५९ ॥
न हीनं मणिधातूनां क्वचिन्मूल्यं प्रकल्पयेत् ।
मूल्यहानिस्तु चैतेषां राजदौष्ट्येन जायते ॥ ३६० ॥
दीर्घे चतुर्भागभूतपत्रे तिर्यग्गतावलिः ।
त्र्यंशगाभ्यंतरगता चार्धगा पादगापि वा ॥(३६१)॥
कार्या व्यापकव्याप्यानां लेखने पदसंज्ञिका ।
श्रेष्ठाभ्यंतरगा तासु वामतस्त्र्यंशगाप्यनु ॥(३६२)॥
दक्षत्र्यंशगता चानु ह्यर्धगा पादगा ततः ।
स्वभ्यंतरे स्वभेदास्स्युस्सदृशास्सदृशे पदे ।
स्वारंभपूर्तिसदृशे पदगे स्तस्सदैव हि ॥ ३६४ ॥
राजा स्वलेख्यचिह्नं तु यथाभिलषितं तथा ।
लेखानुपूर्वं कुर्याद्धि दृष्ट्वा लेख्यं विचार्य च ॥ ३६५ ॥
मंत्री च प्राड्विवाकश्च पंडितो दूतसंज्ञकः ।
स्वाविरुद्धं लेख्यमिदं लिखेयुः प्रथमं त्विमे ॥ ३६६ ॥
अमात्यस्साधु लिखनमस्त्येतत् प्राग्लिखेदयं ।
सम्यग्विचारितमिति सुमंत्रो विलिखेत् ततः ॥ ३६७ ॥
सत्यं यथार्थमिति च प्रधानश्च लिखेत् स्वयं ।
अंगीकर्तुं योग्यमिति ततः प्रतिनिधिर्लिखेत् ॥ ३६८ ॥

अंगीकर्तव्यमिति च युवराजो लिखेत् स्वयं।
लेख्यं स्वाभिमतं चैतद्विलिखेच्च पुरोहितः ॥ ३६९ ॥
स्वस्वमुद्राचिह्नितं च लेख्यांते कुर्युरेव हि।
अंगीकृतमिति लिखेन्मुद्रयेच्च ततो नृपः ॥ ३७० ॥
कार्यान्तरस्याकुलत्वात् सम्यग्द्रष्टुं न शक्यते।
युवराजादिभिर्लेख्यं तदनेन च दर्शितं ॥ ३७१ ॥
समुद्रं विलिखेयुर्वै सर्वे मंत्रिगणास्ततः।
राजा दृष्टमिति लिखेद्द्राक् सम्यग्दर्शनाक्षमः ॥ ३७२ ॥
आयमादौ लिखेत् सम्यग्व्ययं पश्चात् तथागतं।
वामे वायं व्ययं दक्षे पत्रभागे च लेखयेत् ॥ ३७३ ॥
यत्रोभौ व्यापकव्याप्यौ वामोर्ध्वभागगौ क्रमात्।
आधाराधेयरूपौ वा कालार्थं गणितं हि तत् ॥ ३७४ ॥
अधोऽधश्च क्रमात् तत्र व्यापकं वामतो लिखेत्।
व्याप्यानां मूल्यमानादि तत्पंक्त्यां विनिवेशयेत् ॥ ३७५ ॥
ऊर्ध्वगानां तु गणितमधःपङ्क्त्यां प्रजायते।
यत्रोभौ व्यापकव्याप्यौ व्यापकत्वेन संस्थितौ ॥ ३७६ ॥
व्यापकं वहुवृत्तित्वं व्याप्यं स्यान्न्यूनवृत्तिकं।
व्याप्याश्चावयवाः प्रोक्ता व्यापकोऽवयवी स्मृतः ॥ ३७७ ॥
सजातीनां च लिखनं कुर्याच्च समुदायतः।
यथाप्राप्तं तु लिखनमाद्यंतसमुदायतः ॥ ३७८ ॥
व्यापकाश्च पदार्था वा यत्र संति स्थलानि हि।
व्याप्यमायव्ययं तत्र कुर्यात् कालेन सर्वदा ॥ ३७९ ॥
स्थानटिप्पणिका चैषा ततोऽन्यत् संघटिप्पणं।
विशिष्टसंज्ञितं तत्र व्यापकं लेख्यभाषितं ॥ ३८० ॥

आयाः कति व्ययाः कस्य शेषं द्रव्यस्य चास्ति वै।
विशिष्टसंज्ञकैरेषां संविज्ञानं प्रजायते ॥ ३८१ ॥
आदौ लेख्यं यथा प्राप्तं पश्चात् तद्गणितं लिखेत्।
यथा द्रव्यं च स्थानं चाधिकसंज्ञं च टिप्पणैः ॥ ३८२ ॥
शेषायव्ययविज्ञानं क्रमाल्लेख्यैः प्रजायते।
स्थलायव्ययविज्ञानं व्यापकं स्थलतो भवेत् ॥ ३८३ ॥
पदार्थस्य स्थलानि स्युः पदार्थाश्च स्थलस्य तु।
व्याप्यास्तिथ्यादयश्चापि यथेष्टा लेखने नृणां ॥ ३८४ ॥
निश्चितान्यस्वामिकाद्या आया ये इतरांतगाः।
विशिष्टसंज्ञिका ये च पुनरावर्तकादयः।
व्ययाश्च परलेखान्ता अन्तिमव्यापकाश्च ते ॥ ३८५ ॥
इच्छया ताडितं कृत्वादौ प्रमाणफलं ततः।
प्रमाणभक्तं तल्लब्धं भवेदिच्छाफलं नृणां ॥ ३८६ ॥
समासतो लेख्यमुक्तं सर्वेषां स्मृतिसाधनं ॥ ३८७ ॥
गुंजा माषस्तथा कर्षः पदार्धः प्रस्थ एव हि।
यथोत्तरा दशगुणाः पंच प्रस्थस्य चाढकाः ॥ ३८८ ॥
ततश्चाष्टाढकः प्रोक्तो ह्यर्मणस्ते तु विंशतिः।
खारिका स्याद्विद्यते तद्देशे देशे प्रमाणकं ॥ ३८९ ॥
पंचांगुलावटं पात्रं चतुरंगुलविस्तृतं।
प्रस्थपादं तु तज्ज्ञेयं परिमाणे सदा बुधैः ॥ ३९० ॥
ऊर्ध्वांकश्च यथासंज्ञस्तदधस्स्थाश्च वामगाः।
क्रमात् स्वदशगुणिताः परार्धाताः प्रकीर्तिताः ॥ ३९१ ॥
न कर्तुं शक्यते संख्यासंज्ञा कालस्य दुर्गमात्।
ब्रह्मणो द्विपरार्धं तु आयुरुक्तं मनीषिभिः ॥ ३९२ ॥

एको दश शतं चैव सहस्रं चायुतं क्रमात् ।
नियुतं प्रयुतं कोटिरर्बुदं चाब्जखर्वकौ ।
निखर्वपद्मशंखाब्धिमध्यमान्तपरार्धकाः ॥ ३९३ ॥
कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनं ।
भृतिदाने सदा सौरं चान्द्रं कौसीदवृद्धिषु ।
कल्पयेत् सावनं नित्यं दिनभृत्येऽवधौ सदा ॥ ३९५ ॥
कार्यमाना कालमाना कार्यकालमितिस्त्रिधा ।
भृतिरुक्ता तु तद्विज्ञैस्सा देया भाषिता यथा ॥ ३९६ ॥
अयं भारस्त्वया तत्र स्थाप्यस्त्वैतावतीं भृतिं ।
दास्यामि कार्यमाना सा कीर्तिता तद्विदेशकैः ॥ ३९७ ॥
वत्सरे वत्सरे वापि मासि मासि दिने दिने ।
एतावतीं भृतिं तेऽहं दास्यामीति च कालिका ॥ ३९८ ॥
एतावता कार्यमिदं कालेनापि त्वया कृतं ।
भृतिमेतावतीं दास्ये कार्यकालमिता च सा ॥ ३९९ ॥
न कुर्याद्भृतिलोपं तु तथा भृतिविलंघनं ।
अवश्यपोष्यभरणा भृतिर्मध्या प्रकीर्तिता ॥ ४०० ॥
परिपोष्या भृतिश्श्रेष्ठा समान्नाछादनार्थिका ।
भवेदेकस्य भरणं यया सा हीनसंज्ञिका ॥ ४०१ ॥
यथा यथा तु गुणवान् भृतकस्तद्भृतिस्तथा ।
संयोज्या तु प्रयत्नेन नृपेणात्महिताय वै ॥ ४०२ ॥
अवश्यपोष्यवर्गस्य भरणं भृतकाद्भवेत् ।
तथा भृतिस्तु संयोज्या तद्योग्या भृतकाय वै ॥ ४०३ ॥
ये भृत्या हीनभृतिकाश्शत्रवस्ते स्वयंकृताः ।
परस्य साधकास्ते तु छिद्रकोशप्रजाहराः ॥ ४०४ ॥

अन्नाच्छादनमात्रा हि भृतिश्शूद्रादिषु स्मृता ।
तत्पापभागन्यथा स्यात् पोषको मांसभोजिषु ॥ ४०५ ॥
यद्ब्राह्मणेनापहृतं धनं तत् परलोकदं ।
शूद्राय दत्तमपि यन्नरकायैव केवलं ॥ ४०६ ॥
मंदो मध्यस्तथा शीघ्रस्त्रिविधो भृत्य उच्यते ।
समा मध्या च श्रेष्ठा च भृतिस्तेषां क्रमात् स्मृता ॥ ४०७ ॥
भृत्यानां गृहकृत्यार्थं दिवा यामं समुत्सृजेत् ।
निशि यामत्रयं नित्यं दिनभृत्येऽर्धयामकं ॥ ४०८ ॥
तेभ्यः कार्यं कारयीत ह्युत्सवाद्यैर्विना नृपः ।
अत्यावश्यं तूत्सवेऽपि हित्वा श्राद्धदिनं सदा ॥ ४०९ ॥
पादहीनां भृतिं त्वार्ते दद्यात् त्रैमासिकीं ततः ।
पंचवत्सरभृत्ये तु न्यूनाधिक्यं यथा तथा ॥ ४१० ॥
षाण्मासिकीं तु दीर्घार्ते तदूर्ध्वं न च कल्पयेत् ।
नैव पक्षार्धमार्तस्य हातव्याल्पापि वै भृतिः ॥ ४११ ॥
संवत्सरोषितस्यापि ग्राह्यः प्रतिनिधिस्ततः ।
सुमहद्गुणिनं त्वार्तं भृत्यर्धं कल्पयेत् सदा ।
सेवां विना नृपः पक्षं दद्याद्भृत्याय वत्सरे ॥ ४१२ ॥
चत्वारिंशत् समा नीतास्सेवया येन वै नृपः ।
ततस्सेवां विना तस्मै भृत्यर्धं कल्पयेत् सदा ॥ ४१३ ॥
यावज्जीवं तु तत्पुत्रेऽक्षमे बाले तदर्धकं ।
भार्यायां वा सुशीलायां कन्यायां वा स्वश्रेयसे ॥ ४१४ ॥
अष्टमांशं पारितोष्यं दद्याद्भृत्याय वत्सरे ।
कार्याष्टमांशं वा दद्यात् कार्यं द्रागधिकं कृतं ॥ ४१५ ॥
स्वामिकार्ये विनष्टो यस्तत्पुत्रे तद्भृतिं वहेत् ।

यावद्बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं वहेत् ॥ ४१६ ॥
षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत् ।
दद्यात् तदर्धं भृत्याय द्वित्रिवर्षेऽखिलं तु वा ॥ ४१७ ॥
वाक्पारुष्यान्न्यूनभृत्या स्वामी प्रबलदंडतः ।
भृत्यं प्रशिक्षयेन्नित्यं शत्रुत्वं त्वपमानतः ॥ ४१८ ॥
भृतिदानेन संतुष्टा मानेन परिवार्धिताः ।
सांत्विता मृदुवाचा ये न त्यजंत्यधिपं हि ते ॥ ४१९ ॥
अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः ।
उत्तमा मानमिच्छंति मानो हि महतां धनं ॥ ४२० ॥
यथागुणान् स्वभृत्यांश्च प्रजास्संरंजयेन्नृपः ।
शाखाप्रदानतः कांश्चिदपरान् फलदानतः ॥(४२१)॥
अन्यान् सुचक्षुषा हास्यैस्तथा कोमलया गिरा ।
सुभोजनैस्सुवसनैस्तांबूलैश्च धनैरपि ॥(४२२)॥
कांश्चित् सुकुशलप्रश्नैरधिकारप्रदानतः ।
वाहनानां प्रदानेन योग्याभरणदानतः ॥(४२३)॥
छत्रातपत्रचमरदीपिकानां प्रदानतः ।
क्षमया प्रणिपातेन मानेनाभिगमेन च ॥(४२४)॥
सत्कारेण च ज्ञानेन ह्यादरेण शमेन च ।
प्रेम्णा समीपवासेन स्वार्धासनप्रदानतः ।
संपूर्णासनदानेन स्तुत्योपकारकीर्तनात् ॥ ४२६ ॥
यत्कार्ये विनियुक्ता ये कार्याकैरंकयेच्च तान् ।
लोहजैस्ताम्रजै रीतिभवै रजतसम्भवैः ।
सौवर्णे रत्नजैर्वापि यथायोग्यैस्स्वलांछनैः ॥ ४२७ ॥
प्रविज्ञानाय दूरात्तु वस्त्रैश्च मकुटैरपि ।

वाद्यवाहनभेदैश्च भृत्यान् कुर्यात् पृथक् पृथक् ॥ १२८ ॥
स्वविशिष्टं च यच्चिह्नं न दद्यात् कस्यचिन्नृपः ॥ १२९ ॥
दश प्रोक्ताः पुरोधाद्या ब्राह्मणास्सर्व एव ते ।
अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः ॥ १३० ॥
नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः ।
भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः ॥ १३१ ॥
ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा ।
शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः ॥ १३२ ॥
सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः ।
न वैश्यो न च वै शूद्रः कातरश्च कदाचन ॥ १३३ ॥
सेनापतिश्शूर एव योज्यस्सर्वासु जातिषु ।
ससंकरचतुर्वर्णधर्मोऽयं नैव पावनः ॥ १३४ ॥
यस्य वर्णस्य यो राजा स वर्णस्सुखमेधते ॥ १३४ ॥
नोपकृतं मन्यते स्म न तुष्यति सुसेवनैः ।
कथांतरे न स्मरति शंकते प्रलपत्यपि ।
क्षुब्धस्तनोति मर्माणि तं नृपं भृतकस्त्यजेत् ॥ १३६ ॥
लक्षणं युवराजादेः कृत्यमुक्तं समासतः ॥ १३६ ॥

---

इति शुक्रनीतौ युवराजादिलक्षणं नाम द्वितीयोऽध्यायः

---

श्रीः

# शु क्र नी तिः

## तृतीयोऽध्यायः

अथ साधारणं नीतिशास्त्रं सर्वेषु चोच्यते ।
सुखार्थास्सर्वभूतानां मतास्सर्वाः प्रवृत्तयः ॥ १ ॥
सुखं च न विना धर्मात् तस्माद्धर्मपरो भवेत् ।
त्रिवर्गशून्यं नारम्भं भजेत् तं चाविरोधयन् ॥ २ ॥
अनुयायात् प्रतिपदं सर्वधर्मेषु मध्यमः ।
नीचरोमनखश्मश्रुर्निर्मलांघ्रिमलायनः ॥(३)॥
स्नानशीलस्सुसुरभिस्सुवेषोऽनुल्वणोज्ज्वलः ।
धारयेत् सततं रत्नसिद्धमन्त्रमहौषधीः ॥ ४ ॥
सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ।
निशि चात्ययिके कार्ये दण्डी मौलिसहायवान् ॥ ५ ॥
न वेगितोऽन्यकार्यस्स्यान्न वेगान्नीरयेत् बलात् ।
भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ ६ ॥
हिंसास्तेयान्यथाकामपैशुन्यं परुषानृतं ।
संभिन्नालापव्यापादमभिध्यादृग्विपर्ययं ।
पापकर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ ७ ॥
[धर्मकार्यं यतन् शक्त्या नो चेत् प्राप्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र वै नास्ति संशयः ॥ ८ ॥
मनसा चिंतयन् पापं कर्मणा नाभिरोचयेत् ।

तत्प्राप्नोति फलं तस्येत्येवं धर्मविदो विदुः] ॥ ९ ॥
अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकं ॥ १० ॥
उपकारप्रधानस्स्यादपकारपरेऽप्यरौ ।
संपद्विपत्स्वेकमना हेतावीर्षेत् फले न तु ॥ ११ ॥
काले हितं मितं ब्रूयादविसंवादि पेशलं ।
पूर्वाभिभाषी सुमुखस्सुशीलः करुणामृदुः ॥ १२ ॥
नैकस्सुखी न सर्वत्र विस्रब्धो न च शंकितः ॥ १३ ॥
न कंचिदात्मनश्शत्रुं नात्मानं कस्यचिद्रिपुं ।
प्रकाशयेन्नापमानं न च निस्नेहतां प्रभोः ॥ १४ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति ।
तं तथैवानुवर्तेत पराराधनपण्डितः ॥ १५ ॥
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ १६ ॥
एणो गजः पतङ्गश्च भृङ्गो मीनस्तु पन्चमः ।
शब्दस्पर्शरूपगन्धरसैरेते हताः खलु ॥ १७ ॥
एषु स्पर्शो वरस्स्त्रीणां स्वांतहारी मुनेरपि ।
अतोऽप्रमत्तस्सेवेत विषयांस्तु यथोचितान् ॥ १८ ॥
मात्रा स्वस्रा दुहित्रा वा नात्यन्तैकांतिकं वसेत् ।
यथा संबंधमाहूयादाभाष्याश्वास्य वै स्त्रियं ।
स्वीयां तु परकीयां च सुभगे भगिनीति च ॥ १९ ॥
सहवासोऽन्यपुरुषैः प्रकाशमपि भाषणं ।
स्वातंत्र्यं न क्षणमपि ह्यावासोऽन्यगृहे तथा ॥(२०)॥
भर्त्रा पित्राथवा राज्ञा पुत्रश्वशुरबांधवैः ।

स्त्रीणां नैव तु देयस्स्याद्गृहकृत्यैर्विना क्षणः ॥ २१ ॥
चंडं पंडं दंडशीलमकामं सुप्रवासिनं ।
सुदरिद्रं रोगिणं च ह्यन्यस्त्रीनिरतं सदा ॥(२२)॥
पतिं दृष्ट्वा विरक्ता स्यान्नारी वान्यं समाश्रयेत् ।
त्यक्त्वैतान् दुर्गुणान् यत्नादतो रक्ष्यास्स्त्रियो नरैः ॥ २३ ॥
वस्त्रान्नभूषणप्रेममृदुवाग्भिश्च शक्तितः ।
स्वात्यंतसन्निकर्षेण स्त्रियं पुत्रं च रक्षयेत् ॥ २४ ॥
चैत्यपूज्यध्वजाशस्तछायाभस्मतुषाशुचीन् ।
नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ॥ २५ ॥
नदीं तरेन्न बाहुभ्यां नाग्निं स्कन्नमभिव्रजेत् ।
संदिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ॥ २६ ॥
नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवं ।
न संहताभ्यां पाणिभ्यां कंडूयेदात्मनश्शिरः ॥ २७ ॥
नांगैश्चेष्टेत विगुणं नासीतोत्कटुकश्चिरं ।
देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ॥ २८ ॥
नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमं ।
तथा चत्वरचैत्यं न चतुष्पथसुरालयान् ।
शून्याटवीशून्यगृहश्मशानानि दिवापि न ॥ ३० ॥
सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ।
नेक्षेत सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च ॥ ३१ ॥
संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिंतनं ।
मद्यविक्रयसंधानदानादानानि नाचरेत् ॥ ३२ ॥
आचार्यस्सर्वचेष्टासु लोक एव हि धीमतः ।
अनुकुर्यात् तमेवातो लौकिकार्थे परीक्षकः ॥ ३३ ॥

राजदेशकुलज्ञातिसद्धर्मान् नैव दूषयेत् ।
शक्तोऽपि लौकिकाचारं मनसापि न लंघयेत् ॥ ३४ ॥
अयुक्तं यत्कृतं चोक्तं न बलाद्धेतुनोद्धरेत् ॥ ३४" ॥
दुर्गुणस्य च वक्तारः प्रत्यक्षं विरला जनाः ।
लोकतश्शास्त्रतो ज्ञात्वा ह्यतस्त्याज्यांस्त्यजेत् सुधीः ।
अनयं नयसंकाशं मनसापि न चिंतयेत् ॥ ३६ ॥
अहं सहस्रापराधी किमेकेन भवेन्मम ।
मत्वा नाघं स्मरेद्दोषाद्विंदुना पूर्यते घटः ॥ ३७ ॥
नक्तं दिनानि मे यान्ति कथंभूतस्य संप्रति ।
दुःखभाङ्न भवेदेवं नित्यं सन्निहितस्मृतिः ॥ ३८ ॥
समासव्यूहहेत्वादिकृतेच्छार्थं विहाय च ।
स्तुत्यर्थवादान् संत्यज्य सारं संगृह्य यत्नतः ॥(३९)॥
धर्मतत्त्वं हि गहनमतस्सत्सेवितं नरः ।
श्रुतिस्मृतिपुराणानां कर्म कुर्याद्विचक्षणः ॥ ४० ॥
न गोपयेद्वासयेच्च राजा मित्रं सुतं गुरुं ।
अधर्मनिरतं स्तेनमाततायिनमप्युत ॥ ४१ ॥
अग्निदो गरदश्चैव शस्त्रोन्मत्तो धनापहः ।
क्षेत्रदारहरश्चैतान् षड्विद्यादाततायिनः ॥ ४२ ॥
नोपेक्षेत स्त्रियं बालं रोगं दासं पशुं धनं ।
विद्याभ्यासं क्षणमपि सत्सेवां बुद्धिमान्नरः ॥ ४३ ॥
विरुद्धो यत्र नृपतिर्धनिकश्श्रोत्रियो भिषक् ।
आचारश्च तथा देशो न तत्र दिवसं वसेत् ॥ ४४ ॥
नपुंसकश्च स्त्री बालश्चंडो मूर्खश्च साहसी ।
यत्राधिकारिणश्चैते न तत्र दिवसं वसेत् ॥ ४५ ॥

अविवेकी यत्र राजा सभ्या यत्र तु पाक्षिकाः ।
सन्मार्गोज्झितविद्वांसस्साक्षिणोऽनृतवादिनः ॥(४६)॥
दुरात्मनां च प्राबल्यं स्त्रीणां नीचजनस्य च ।
यत्र नेच्छेद्धनं मानं वसतिं तत्र जीवितं ॥ ४७ ॥
माता न पालयेद्बाल्ये पिता साधु न शिक्षयेत् ।
राजा यदि हरेद्वित्तं का तत्र परिदेवना ॥ ४८ ॥
सुसेविताः प्रकुप्यंति मित्रस्वजनपार्थिवाः ।
गृहमग्न्यशनिहतं का तत्र परिदेवना ॥ ४९ ॥
आप्तवाक्यमनादृत्य दर्पेणाचरितं यदि ।
फलितं विपरीतं तत् का तत्र परिदेवना ॥ ५० ॥
सावधानमना नित्यं राजानं देवतां गुरुं ।
अग्निं तपस्विनं धर्मज्ञानवृद्धं सुसेवयेत् ॥ ५१ ॥
मातृपितृगुरुस्वामिभ्रातृपुत्रसखिष्वपि ।
न विरुध्येन्नापकुर्यान्मनसापि क्षणं क्वचित् ॥ ५२ ॥
स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा ।
न कुर्यात् स्त्रीबालवृद्धमूर्खेषु च विवादनं ॥ ५३ ॥
एकस्स्वादु न भुंजीत एक अर्थान्न चिंतयेत् ।
एको न गच्छेदध्वानं नैकस्सुप्तेषु जागृयात् ॥ ५४ ॥
नान्यधर्मं हि सेवेत न द्रुह्याद्वै कदाचन ।
हीनकर्मगुणैस्स्त्रीभिर्नासीतैकासने क्वचित् ॥ ५५ ॥
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्रा भयं क्रोध आलस्यं दीर्घसूत्रता ।
प्रभवंति विघाताय कार्यस्यैते न संशयः ॥ ५६ ॥
उपायज्ञश्च योगज्ञस्तत्त्वज्ञः प्रतिभानवान् ।

स्वधर्मनिरतो नित्यं परस्त्रीषु पराङ्मुखः ।
वक्तोहवांश्चित्रकथस्स्यादकुंठितवाक् सदा ॥ ५८ ॥
चिरं संशृणुयान्नित्यं जानीयात् क्षिप्रमेव च ।
विज्ञाय प्रभजेदर्थान्न कामं प्रभजेत् क्वचित् ॥ ५९ ॥
क्रयविक्रयातिलिप्सां स्वदैन्यं दर्शयेन्न हि ।
कार्यं विनान्यगेहे न नाज्ञातः प्रविशेदपि ॥ ६० ॥
अपृष्टो नैव कथयेद्गृहकृत्यं तु कं प्रति ।
बह्वर्थाल्पाक्षरं कुर्यात् सल्लापं कार्यसाधकं ॥ ६१ ॥
न दर्शयेत् स्वाभिमतमनुभूताद्विना सदा ।
ज्ञात्वा परमतं सम्यक् तेनाज्ञातोत्तरं वदेत् ॥ ६२ ॥
दंपत्योः कलहे साक्ष्यं न कुर्यात् पितृपुत्रयोः ।
सुगुप्तः कृत्यमंत्रस्स्यान्न त्यजेच्छरणागतं ॥ ६३ ॥
यथाशक्ति चिकीर्षेत कुर्वन् मुह्येच्च नापदि ।
कस्यचिन्न स्पृशेन्मर्म मिथ्यावादं न कस्यचित् ॥ ६४ ॥
नाश्लीलं कीर्तयेत् कंचित् प्रलापं न च कारयेत् ॥ ६४" ॥
अस्वर्ग्यं स्याद्धर्म्यमपि लोकविद्वेषितं तु यत् ।
स्वहेतुभिर्न हन्येत कस्य वाक्यं कदाचन ॥ ६५" ॥
प्रविचार्योत्तरं देयं सहसा न वदेत् क्वचित् ।
शत्रोरपि गुणा ग्राह्या गुरोस्त्याज्यास्तु दुर्गुणाः ॥ ६६" ॥
उत्कर्षो नैव नित्यस्स्यान्नापकर्षस्तथैव च ।
प्राक्कर्मवशतो नित्यं सधनो निर्धनो भवेत् ।
तस्मात् सर्वेषु भूतेषु मैत्रीं नैव च हापयेत् ॥ ६८ ॥
दीर्घदर्शी सदा च स्यात् प्रत्युत्पन्नमतिः क्वचित् ।
साहसी सालसी चैव चिरकारी भवेन्न हि ॥ ६९ ॥

यस्तुदुर्निष्फलं कर्म ज्ञात्वा कर्तुं व्यवस्यति ।
द्रागादौ दीर्घदर्शी स्यात् स चिरं सुखमश्नुते ॥ ७० ॥
प्रत्युत्पन्नमतिः प्राप्तां क्रियां कर्त्तुं व्यवस्यति ।
सिद्धिस्सांशयकी तत्र चापल्यात्कार्यगौरवात् ॥ ७१ ॥
यतते नैव कालेऽपि क्रियां कर्तुं च सालसः ।
न सिद्धिस्तस्य कुत्रापि स नश्यति च सान्वयः ॥ ७२ ॥
क्रियाफलमविज्ञाय यतते साहसी च सः ।
दुःखभागी भवत्येव क्रियया तत्फलेन वा ॥ ७३ ॥
महत्कालेनाल्पकर्म चिरकारी करोति च ।
स शोचत्यल्पफलतो दीर्घदर्शी भवेदतः ॥ ७४ ॥
सुफलं तु भवेत् कर्म कदाचित् सहसा कृतं ।
निष्फलं वापि प्रभवेत् कदाचित् सुविचारितं ।
तथापि नैव कुर्वीत सहसानर्थकारि तत् ॥ ७५ ॥
कदाचिदपि संजातमकार्यादिष्टसाधनं ।
यदनिष्टं तु सत्कार्यान्नाकार्यप्रेरकं हि तत् ॥ ७६ ॥
भृत्यो भ्रातापि वा पुत्रः पत्नी कुर्यान्न चैव यत् ।
विधास्यंति च मित्राणि तत्कार्यमविशंकितं ॥ ७७ ॥
यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः ।
मित्रार्थे योजयत्येनं तस्य सोऽर्थोऽवसीदति ॥ ७८ ॥
न हि मानसिको धर्मः कस्यचिज्ज्ञायतेऽजसा ।
अतो यतेत तत्प्राप्त्यै मित्रलब्धिर्वरा नृणां ॥ ७९ ॥
नात्यन्तं विश्वसेत् कंचिद्विश्वस्तमपि सर्वदा ।
पुत्रं वा भ्रातरं भार्याममात्यमधिकारिणं ॥ ८० ॥
धनस्त्रीराज्यलोभो हि सर्वेषामधिको यतः ।

प्रामाणिकञ्चानुभूतमाप्तं सर्वत्र विश्वसेत् ।
विश्वसित्वात्मवद्गूढस्तत्कार्यं विमृशेत् स्वयं ॥ ८२ ॥
तद्वाक्यं तर्कतोऽनर्थं विपरीतं न चिन्तयेत् ।
चतुष्षष्टितमांशं तन्नाशितं क्षमयेदथ ॥ ८३ ॥
स्वधर्मनीतिबलवांस्तेन मैत्रीं प्रधारयेत् ।
दानैर्मानैश्च सत्कारैस्सुपूज्यान् पूजयेत् सदा ॥ ८४ ॥
कदापि नोग्रदण्डस्स्यात् कटुभाषणतत्परः ।
भार्या पुत्रोऽप्युद्विजते कटुवाक्यात् प्रदण्डतः ।
पशवोऽपि वशं यान्ति दानैश्च मृदुभाषणैः ॥ ८५ ॥
न विद्यया न शौर्येण धनेनाभिजनेन च ।
न बलेन प्रमत्तस्स्याच्चातिमानी कदाचन ॥ ८६ ॥
नाप्तोपदेशं संवेत्ति विद्यामत्तस्स्वहेतुभिः ।
अनर्थमप्याभिप्रेतं मन्यते परमार्थवत् ॥ ८७ ॥
महाजनैर्धृतः पन्था येन संत्यज्यते बलात् ।
शौर्यमत्तस्तु सहसा युद्धं कृत्वा जहात्यसून् ।
व्यूहादियुद्धकौशल्यं तिरस्कृत्य च शस्त्रवान् ॥ ८९ ॥
श्रीमत्तः पुरुषो वेत्ति न दुष्कीर्तिमजो यथा ।
स्वमूत्रगंधं मूत्रेण मुखमासिञ्चते स्वकं ॥ ९० ॥
तथाभिजनमत्तस्तु सर्वानेवावमन्यते ।
श्रेष्ठानपीतरान् सम्यगकार्ये कुरुते मतिं ॥ ९१ ॥
बलमत्तस्तु सहसा युद्धे विदधते मनः ।
बलेन बाधते सर्वान् पश्वादीनपि ह्यन्यथा ॥ ९२ ॥
मानमत्तो मन्यते स्म तृणवच्चाखिलं जगत् ।
अनर्होऽपि च सर्वेभ्यस्त्वत्यर्घासनमिच्छति ॥ ९३ ॥

मदा एतेऽवलिप्तानां सतामेते दमास्स्मृताः ॥ ९३॥
विद्यायाश्च फलं ज्ञानं विनयश्च फलं श्रियः।
यज्ञदाने बलफलं सद्रक्षणमुदाहृतं ॥(९४)॥
नामिताश्शात्रवश्शौर्यफलं च करदीकृताः।
शमो दमश्चार्जवं चाभिजनस्य फलं त्विदं।
मानस्य तु फलं चैतत् सर्वे स्वसदृशा इति ॥ ९६॥
सुविद्यामन्त्रभैषज्यस्त्रीरत्नं दुष्कुलादपि।
गृह्णीयात् सुप्रयत्नेन मानमुत्सृज्य साधकः ॥ ९७॥
उपेक्षेत प्रनष्टं यत् प्राप्तं यत् तदुपाहरेत्।
न बालं न स्त्रियं चातिलालयेत् ताडयेन्न च।
विद्याभ्यासे गृह्यकृत्ये तावुभौ योजयेत् क्रमात् ॥ ९८॥
परद्रव्यं क्षुद्रमपि नादत्तं स हरेदणु।
नोच्चारयेदघं कस्य स्त्रियं नैव च दूषयेत् ॥ ९९॥
न ब्रूयादनृतं साक्ष्यं कृतं साक्ष्यं न लोपयेत्।
प्राणात्ययेऽनृतं ब्रूयात्सुमहत्कार्यसाधने ॥ १००॥
कन्यादात्रे तु ह्यधनं दस्यवे सधनं नरं।
गुप्तं जिघांसवे नैव विज्ञातमपि दर्शयेत् ॥ १०१॥
जायापत्योश्च पित्रोश्च भ्रात्रोश्च स्वामिभृत्ययोः।
भगिन्योर्मित्रयोर्भेदं न कुर्याद्गुरुशिष्ययोः ॥ १०२॥
न मध्याद्गमनं भाषाशालिनोस्स्थितयोरपि।
सुहृदं भ्रातरं बंधुमुपचर्यात् सदात्मवत् ॥ १०३॥
गृहागतं क्षुद्रमपि यथार्हं पूजयेत् सदा।
तदीयकुशलप्रश्नैश्शक्त्या दानैर्जलादिभिः ॥ १०४॥
सपुत्रस्तु गृहे कन्यां सपुत्रां वासयेन्न हि।

सभर्तृकां च भगिनीमनाथे ते तु पालयेत् ॥ १०५ ॥
सर्पोऽग्निर्दुर्जनो राजा जामाता भगिनीसुतः ।
रोगश्शत्रुर्नावमान्योऽप्यल्प इत्युपचारितः ॥ १०६ ॥
क्रौर्यात् तैक्ष्ण्याद्दुस्स्वभावात् स्वामित्वात् पुत्रिकाभयात् ।
स्वपूर्वनपिण्डदत्वाद्दृद्धिभीभ्यामुपाचरेत् ॥ १०७ ॥
ऋणशेषं रोगशेषं शत्रुशेषं न रक्षयेत् ।
याचकाद्यैः प्रार्थितस्सन्न तीक्ष्णं चोत्तरं वदेत् ।
तत्कार्यं तु समर्थश्चेत् कुर्याद्वा कारयीत च ॥ १०९ ॥
दातॄणां धार्मिकाणां च शूराणां कीर्तनं सदा ।
शृणुयाच्चु प्रयत्नेन तच्छिद्रं नैव लक्षयेत् ॥ ११० ॥
काले हितमिताहारविहारी विघसाशनः ।
अदीनात्मा च सुस्वप्नश्शुचिस्स्यात् सर्वदा नरः ॥ १११ ॥
कुर्याद्विहारमाहारं निर्हारं विजने सदा ।
व्यवसायी सदा च स्यात् सुखं व्यायाममभ्यसेत् ॥ ११२ ॥
अन्नं न निंद्यात् सुस्वस्थस्स्वीकुर्यात् प्रीतिभोजनं ।
आहारं प्रवरं विंद्यात् षड्रसं मधुरोत्तरं ॥ ११३ ॥
विहारं चैव स्वस्त्रीभिर्वेश्याभिर्न कदाचन ।
नियुद्धं कुशलैस्सार्धं व्यायामं नतिभिर्वरं ॥ ११४ ॥
हित्वा प्राक्पश्चिमौ यामौ निशि स्वापो वरो मतः ।
दीनांधपंगुबधिरा नोपहास्याः कदाचन ॥ ११५ ॥
नाकार्ये तु मतिं कुर्याद्द्राक् स्वकार्यं प्रसाधयेल् ।
उद्योगेन बलेनैव बुध्या धैर्येण साहसात् ।
पराक्रमेणार्जवेन मानमुत्सृज्य साधकः ॥ ११६ ॥
यदि सिध्यति येनार्थः कलहेन वरस्तु सः ।

अन्यथायुर्धनसुहृद्यशस्सुखहरस्स्मृतः ॥ ११७" ॥
नानिष्टं प्रवदेत् कस्मिन् न छिद्रं कस्य लक्षयेत् ।
आज्ञाभङ्गस्तु महतां राज्ञः कार्यो न वै क्वचित् ॥ ११८" ॥
असत्कार्यनियोक्तारं गुरुं वापि प्रबोधयेत् ।
नातिक्रामेदपि लघुं क्वचित् सत्कार्यबोधकं ॥ ११९" ॥
कृत्वा स्वतन्त्रां तरुणीं स्त्रियं गच्छेन्न वै क्वचित् ।
स्त्रियो मूलमनर्थस्य तरुण्यः किं परैस्सह ॥ १२०" ॥
न प्रमाद्येन्मदद्रव्यैर्न विमुह्येत् कुसंततौ ॥ १२१ ॥
साध्वी भार्या पितृपत्नी माता बालापिता स्नुषा ।
अभर्तृकानपत्या या साध्वी कन्या स्वसापि च ॥(१२२)॥
मातुलानी भ्रातृभार्या पितृमातृस्वसा तथा ।
मातामहोऽनपत्यश्च गुरुश्वशुरमातुलाः ॥(१२३)॥
बालोऽपिता च दौहित्रो भ्राता च भागिनीसुतः ।
एतेऽवश्यं पालनीयाः प्रयत्नेन स्वशक्तितः ॥ १२४ ॥
अविभवेऽपि विभवे पितृमातृकुलं सुहृत् ।
पत्न्याः कुलं दासदासीभृत्यवर्गांश्च पोषयेत् ॥ १२५ ॥
विकलाङ्गान् प्रव्रजितान् दीनानाथांश्च पालयेत् ॥ १२५" ॥
कुटुम्बभरणार्थेषु यत्नवान न भवेच्च यः ।
तस्य सर्वगुणैः किंतु जीवन्नेव मृतश्च सः ॥ १२६" ॥
न कुटुंबं भृतं येन नामिताश्शत्रवोऽपि न ।
प्राप्तं संरक्षितं नैव कस्य किं जीवितेन वै ॥ १२७" ॥
स्त्रीभिर्जितो ऋणी नित्यं सुदरिद्री च याचकः ।
गुणहीनोऽर्थहीनस्तन् मृता एते सजीवकाः ॥ १२८" ॥
आयुर्वित्तं गृहच्छिद्रं मंत्रमैथुनभेषजं ।

दानमानापमानं च नवैतानि सुगोपयेत् ॥ १२९ ॥
देशाटनं राजसभावेशनं शास्त्रचिंतनं ।
वेश्यादिदर्शनं विद्वन्मैत्रीं कुर्यादतंद्रितः ॥ १३० ॥
अनेकाश्च तथा धर्माः पदार्थाः पशवो नराः ।
देशाटनात् स्वानुभूताः प्रभवंति च पर्वताः ॥ १३१ ॥
कीदृशा राजपुरुषा न्यायान्यायं च कीदृशं ।
मिथ्याविवादिनः के च के वै सत्यविवादिनः ॥(१३२)॥
कीदृशी व्यवहारस्य प्रवृत्तिश्शास्त्रलोकतः ।
सभागमनशीलस्य तद्विज्ञानं प्रजायते ॥ १३३ ॥
नाहंकारी च धर्मांधश्शास्त्राणां तत्त्वचिंतनैः ।
एकं शास्त्रमधीयानो न विद्यात् कार्यनिर्णयं ॥ १३४ ॥
स्याद्बह्वागमसंदर्शी व्यवहारो महानतः ।
बुद्धिमानभ्यसेन्नित्यं बहुशास्त्राण्यतंद्रितः ॥ १३५ ॥
तदर्थं तु गृहीत्वापि तदधीना न जायते ।
वेश्या तथाविधा वापि वशीकर्तुं नरं क्षमा ॥ १३६ ॥
नेयात् कस्य वशं तद्वत् स्वाधीनं कारयेज्जगत् ॥ १३७ ॥
श्रुतिस्मृतिपुराणानामर्थविज्ञानमेव च ।
सहवासात् पंडितानां बुद्धिः पंडा प्रजायते ॥ १३८ ॥
देवपित्रतिथिभ्योऽन्नमदत्वा नाश्नीयात् क्वचित् ।
आत्मार्थं यः पचेन्मोहान्नरकार्थं स जीवति ॥ १३९ ॥
मार्गं गुरुभ्यो बलिने व्याधिताय शवाय च ।
राज्ञे श्रेष्ठाय व्रतिने यानगाय समुत्सृजेत् ॥ १४० ॥
शकटात् पंचहस्तं तु दशहस्तं तु वाजिनः ।
दूरतश्शतहस्तं च तिष्ठेन्नागाद्वृषाद्दश ॥ १४१ ॥

शृङ्गिणां च नखिनां च दंष्ट्रिणां दुर्जनस्य च ।
नदीनां वसतौ स्त्रीणां विश्वासं नैव कारयेत् ॥ १४२ ॥
खादन् न गच्छेदध्वानं न च हास्येन भाषणं ।
शोकं न कुर्यान्नष्टस्य स्वकृतेरपि जल्पनं ॥ १४३ ॥
स्वशंकितानां सामीप्यं त्यजेद्वै नीचसेवनं ।
सल्लापं नैव शृणुयाद्गुप्तः कस्यापि सर्वदा ॥ १४४ ॥
उत्तमैरननुज्ञातं कार्यं नेच्छेच्च तैस्सह ।
देवैस्साकं सुधापानाद्राहोश्छिन्नं शिरो यतः ॥ १४५ ॥
महतोऽसत्कृतमपि भवेत् तद्रूपणाय वै ।
विषपानं शिवस्यैव त्वन्येषां मृत्युकारकं ॥ १४६ ॥
तेजस्वी क्षमते सर्वं भोक्तुं वह्निरिवानघः ।
न सांमुख्ये गुरोस्स्थेयं राज्ञश्श्रेष्ठस्य कस्यचित् ॥ १४७ ॥
राजा मित्रमिति ज्ञात्वा न कार्यं मानसेप्सितं ।
नेच्छेन्मूर्खस्य स्वामित्वं दास्यमिच्छेन्महात्मनां ।
विरोधं न ज्ञानलवदुर्विदग्धस्य रंजनं ॥ १४८ ॥
अत्यावश्यमनावश्यं क्रमात कार्यं समाचरेत् ।
प्राक् पश्चाद्द्राग्विलंबेन प्राप्तं कार्यं तु बुद्धिमान ॥ १४९ ॥
पित्राज्ञप्ते नापि मातृवधरूपे सुपूजिता ।
धृता गौतमपुत्रेण ह्यकार्ये चिरकारिता ॥ १५० ॥
प्रेम्णा समीपवासेन स्तुत्या नत्या च सेवया ।
कौशल्येन कलाभिश्च कथाभिर्ज्ञानतोऽपि च ॥ १५१ ॥
आदरेणार्जवेनैव शौर्योदानेन विद्यया ।
प्रत्युत्थानाभिगमनैरानंदस्मितभाषणैः ।
उपकारैस्स्वाशयेन वशीकुर्याज्जगत् सदा ॥ १५२ ॥

एते वश्यकरोपाया दुर्जने निष्फलास्स्मृताः ।
तत्सन्निधिं त्यजेत् प्राज्ञश्शक्तस्तं दंडतो जयेत् ।
छलभूतैस्तु तद्रूपैरुपायैरेभिरेव वा ॥ १५४ ॥
श्रुतिस्मृतिपुराणानामभ्यासस्सर्वदा हितः ।
सांगानां सोपवेदानां सकलानां नरस्य हि ॥ १५५ ॥
मृगयाक्षास्स्त्रियः पानं व्यसनानि नृणां सदा ।
चत्वार्येतानि संत्यज्य युक्त्या संयोजयेत् क्वचित् ॥ १५६ ॥
कूटेन व्यवहारं तु वृत्तिलोपं न कस्यचित् ।
न कुर्याच्चिंतयेत् कस्य मनसाप्यहितं क्वचित् ॥ १५७ ॥
तत्कार्यं तु सुखं यस्माद्भवेत् त्रैकालिकं दृढं ।
मृते स्वर्गं जीवति च विद्यात् कीर्तिं दृढां शुभां ॥ १५८ ॥
जागर्ति च सचिंतो य आधिव्याधिनिपीडितः ।
जारश्चोरो बलिद्विष्टो विषयी धनलोलुपः ॥(१५९)॥
कुसहायी कुनृपतिर्भिन्नामात्यसुहृत्प्रजः ।
कुर्याद्यथा समीक्ष्यैतत् सुखं स्वप्याच्चिरं नरः ॥ १६० ॥
राज्ञो नानुकृतिं कुर्यान्न च श्रेष्ठस्य कस्यचित् ।
नैको गच्छेद् व्यालव्याघ्रचोरेषु च प्रबाधितुं ॥ १६१ ॥
जिघांसंतं जिघांसीयाद्गुरुमप्याततायिनं ।
कलहे न सहायस्स्यात् संरक्षेद्बहुनायकं ॥ १६२ ॥
गुरूणां पुरतो राज्ञो न चासीत महासने ।
प्रौढपादो न तद्वाक्यं हेतुभिर्विकृतिं नयेत् ॥ १६३ ॥
यत् कर्तव्यं न जानाति कृतं जानाति चेतरः ।
नैव वक्ति च कर्तव्यं कृतं यश्चोत्तमो नरः ॥ १६४ ॥
न प्रियाकथितं सम्यङ्मन्येतानुभवं विना ।

अपराधं मातृस्नुषाभ्रातृपत्नीसपत्निजं ॥ १६५ ॥
अनृतं साहसं माया मूर्खत्वमतिलोभता।
अशौचं निर्दया दर्पस्त्रीणामष्टौ स्वदुर्गुणाः ॥ १६६ ॥
षोडशाब्दात् परं पुत्रं द्वादशाब्दात् परं स्त्रियं।
न ताडयेद्दुष्टवाक्यैः पीडयेन्न स्नुषादिकं ॥ १६७ ॥
पुत्राधिकाश्च दौहित्रा भागिनेयाश्च भ्रातरः।
कन्याधिकाः पालनीया भ्रातृभार्या स्नुषा स्वसा ॥ १६८ ॥
आगमार्थं हि यतते रक्षणार्थं हि सर्वदा।
कुटुंबपोषणे स्वामी तदन्ये तस्करा इव ॥ १६९ ॥
अनृतं साहसं मौर्ख्यं कामाधिक्यं स्त्रियां यतः।
कामाद्विनैकशयने नैव सुप्यात् स्त्रिया सह ॥ १७० ॥
दृष्ट्वा धनं कुलं शीलं रूपं विद्यां वलं वयः।
कन्यां दद्यादुत्तमं चेन्मैत्रीं कुर्यादथात्मनः ॥(१७१)॥
भार्यार्थिनं वयोविद्यारूपिणं निर्धनं त्वपि।
न केवलेन रूपेण वयसा न धनेन च ॥ १७२ ॥
आदौ कुलं परीक्षेत ततो विद्यां ततो वयः।
शीलं धनं ततो रूपं देशं पश्चाद्विवाहयेत् ॥ १७३ ॥
कन्या वरयते रूपं माता वित्तं पिता श्रुतं।
बांधवाः कुलमिच्छंति मृष्टान्नमितरे जनाः ॥ १७४ ॥
भार्यार्थं वरयेत् कन्यामसमानर्षिगोत्रजां।
भ्रातृमतीं सुकुलां च योनिदोषविवर्जितां ॥ १७५ ॥
क्षणशः कणशश्चैव विद्यामर्थं च साधयेत्।
न त्याज्यौ तु क्षणकणौ नित्यं विद्याधनार्थिना ॥ १७६ ॥
सुभार्यापुत्रमित्रार्थं हितं नित्यं धनार्जनं।

दानार्थं च विना त्वेतैः किं धनैश्च जनैश्च किं ॥ १७७ ॥
भाविसंरक्षणक्षमं धनं यत्नेन रक्षयेत् ।
जीवामि शतवर्षं तु नंदामि च धनेन वै ।
इति बुद्ध्या संचिनुयाद्धनं विद्यादिकं सदा ॥(१७९)॥
पंचविंशत्यब्दपूरं तदर्धं वा तदर्धकं ।
विद्याधनं श्रेष्ठतरं तन्मूलमितरद्धनं ॥ १८० ॥
दानेन वर्धते नित्यं न भाराय न नीयते ।
अस्ति यावन् तु सधनस्तावत् सर्वैस्तु सेव्यते ॥ १८१ ॥
निर्धनस्त्यज्यते भार्यापुत्राद्यैस्सगुणोऽप्यतः ।
संसृतौ व्यवहाराय सारभूतं धनं स्मृतं ॥ १८२ ॥
अतो यतेत तत्प्राप्त्यै नरस्सूपायसाहसैः ।
सुविद्यया सुसेवाभिश्शौर्येण कृषिभिस्तथा ॥(१८३)॥
कौसीदवृद्ध्या पण्येन कलाभिश्च प्रतिग्रहैः ।
यया कया चापि वृत्त्या धनवान् स्यात् तथाचरेत् ॥ १८४ ॥
तिष्ठंति सधनद्वारे गुणिनः किंकरा इव ॥ १८४ ॥
दोषा अपि गुणायंते दोषायंते गुणा अपि ।
धनवतो निर्धनस्य निंद्यते निर्धनोऽखिलैः ॥ १८५ ॥
सुनिर्धनत्वं प्राप्यैके मरणं भेजिरे जनाः ।
ग्रामायैकेऽचलायैके नाशायैके प्रवव्रजुः ॥(१८६)॥
उन्मादमेके पुष्यन्ति यांत्यन्ये द्विषतां वशं ।
दास्यमेके च गच्छंति परेषामर्थहेतुना ॥ १८७ ॥
यथा न जानंति धनं संचितं कति कुत्र वै ।
आत्मस्त्रीपुत्रमित्राणि सलेखं धारयेत् तथा ॥ १८८ ॥
नैवास्ति लिखितादन्यत्स्मारकं व्यवहारिणां ।

न लेख्येन विना कुर्याद्व्यवहारं सदा बुधः ॥ १८९ ॥
निर्लोभे धनिके राज्ञि विश्वस्ते क्षमिणां वरे ।
सुसंचितं धनं धार्यं गृहीतलिखितं तु वा ॥ १९० ॥
मैत्र्यर्थे याचितं दद्यादकुसीदं धनं सदा ।
तस्मिन् स्थितं चेन्न नहु हानिकृच्च तथाविधं ॥ १९१ ॥
दृष्ट्वाधमर्णं वृद्ध्यापि व्यवहारक्षमं सदा ।
सबंधं सप्रतिभुवं धनं दद्याच्च साक्षिमत् ॥ १९२ ॥
गृहीतलिखितं योग्यमानं प्रत्यागमे सुखं ।
न दद्याद्वृद्धिलोभेन नष्टं मूलधनं भवेत् ॥ १९३ ॥
आहारे व्यवहारे च त्यक्तलज्जस्सुखी भवेत् ।
धनं मैत्रीकरं दाने चादाने शत्रुकारकं ॥ १९४ ॥
कृत्वा स्वान्ते तथौदार्यं कार्पण्यं बहिरेव च ।
उचितं तु व्ययं काले नरः कुर्यान्न चान्यथा ॥ १९५ ॥
सुभार्यापुत्रमित्राणि शक्त्या संरक्षयेद्धनैः ।
नात्मा पुनरतो त्मानं सर्वैस्सर्वं पुनर्भवेत् ॥ १९६ ॥
पश्यति स्म सजीवश्चेन्नरो भद्रशतानि च ।
सदारप्रौढपुत्रान् द्राक् श्रेयोऽर्थी विभजेत् पिता ॥ १९७ ॥
सदारभ्रातरः प्रौढा विभजेयुः परस्परं ।
एकोदरा अपि प्रायो विनाशायान्यथा खलु ॥ १९८ ॥
नैकत्र संवसेच्चापि स्त्रीद्वयं मनुजस्य तु ।
कथं वसेत्तद्बहुत्वं पशूनां तु नरद्वयं ॥ १९९ ॥
विभजेयुर्न तत्पुत्रा यद्धनं वृद्धिकारणं ।
अधमर्णस्थितं चापि यद्देयं चौत्तमर्णिकं ॥ २०० ॥
यस्येच्छेदुत्तमां मैत्रीं कुर्यान्नार्थाभिलापकं ।

परोक्षे तद्गृहश्चारं तत्स्त्रीसंभाषणं तथा ॥(२०१")॥
तन्न्यूनदर्शनं नैव तत्प्रतीपविवादनं।
असहाय्यं च तत्कार्ये ह्यनिष्टोपेक्षणं न च ॥ २०२" ॥
सकुसीदमकुसीदं धनं यच्चौत्तमर्णिकं।
दद्यादगृहीतमिव नोभयोः क्लेशकृद्यथा।
नासाक्षिमच्चालिखितमृणपत्रस्य पृष्ठतः ॥ २०४ ॥
आत्मपितृमातृगुणैः प्रख्यातश्चोत्तमोत्तमः।
गुणैरात्मभवैः ख्यातः पैतृकैर्मातृकैः पृथक् ॥(२०५)॥
उत्तमो मध्यमो नीचोऽधमो भ्रातृगुणैर्नरः।
कन्यास्त्रीभगिनीभाग्यो नरोऽधमतमो मतः ॥ २०६ ॥
भूत्वा महाधनस्सम्यक् पोष्यवर्गं तु पोषयेत्।
अदत्वा यत्किंचिदपि न नयेद्दिवसं बुधः ॥ २०७ ॥
स्थितो मृत्युमुखे चाहं क्षणमायुर्ममास्ति न।
इति मत्वा दानधर्मौ यथेष्टौ तु समाचरेत् ॥ २०८ ॥
न तौ विना मे परत्र सहायास्सन्ति चेतरे।
दानशीलाश्रयाल्लोको वर्तते न शठाश्रयात् ॥ २०९ ॥
भवंति मित्रा दानेन द्विषंतोऽपि च किं पुनः ॥ २०९" ॥
देवतार्थं च यज्ञार्थं ब्राह्मणार्थं गवार्थकं।
यद्दत्तं तत् पारलौक्यं संविद्दत्तं तदुच्यते ॥ २१०" ॥
वंदिमागधमल्लादिनटनार्थं च दीयते।
पारितोष्यं यशोऽर्थं तु श्रिया दत्तं तदुच्यते ॥ २११" ॥
उपायनीकृतं यत्तु सुहृत्संबंधिबंधुषु।
विवाहादिषु चाचारदत्तं ह्रीदत्तमेव तत् ॥ २१२" ॥
राज्ञे च बलिने दत्तं कार्यार्थं कार्यघातिने।

पापभीत्याथवा यच्च तत्तु भीदत्तमुच्यते ॥ २१३ ॥
यद्दत्तं हिंसृद्ध्यर्थं नष्टं द्यूतविनाशितं ।
चोरैर्हृतं पापदत्तं परस्त्रीसंगमार्थकं ॥ २१४ ॥
आराधयति यं देवं तमुत्कृष्टतरं वदेत् ।
तन्न्यूनतां नैव कुर्याज्जोपयेत् तस्य सेवनं ॥ २१५ ॥
विना दानार्जवाभ्यां न भुव्यस्ति च वशीकरं ।
दानक्षीणो विवर्धिष्णुश्शशी वक्रोऽप्यतश्शुभः ॥ २१६ ॥
विचार्य स्नेहं द्वेषं वा कुर्यात् कृत्वा न चान्यथा ।
नापकुर्यान्नोपकुर्याद्भवतोऽनर्थकारिणौ ॥ २१७ ॥
नातिक्रौर्यं नातिशाठ्यं धारयेन्नातिमार्दवं ।
नातिवादं नातिकार्यासक्तिमत्याग्रहं न च ॥ २१८ ॥
अति सर्वं नाशहेतुर्ह्यतोऽत्यंतं विवर्जयेत् ।
उद्वेजते जनः क्रौर्यात् कार्पण्यादातिनिंदति ॥ २१९ ॥
मार्दवान्नैव गणयेदपमानोऽतिवादतः ।
अतिदानेन दारिद्र्यं तिरस्कारोऽतिलोभतः ॥ १२० ॥
अत्याग्रहान्नरस्यैव मौर्ख्यं संजायते खलु ।
अनाचाराद्धर्महानिरत्याचारस्तु मूर्खता ॥ १२१ ॥
ह्यधिकोऽस्मीति सर्वेभ्यो ह्यधिकज्ञानवानहं ।
धर्मतत्त्वमिदमिति नैवं मन्येत बुद्धिमान् ॥ २२२ ॥
तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ।
कश्चित्तु तद्गिलोऽस्तीति मत्वा मन्येत कर्हिचित् ॥ २२३ ॥
नेच्छेत् साम्यं तु देवेषु गोषु च ब्राह्मणेषु च ।
महानर्थकरं ह्येतत् समग्रकुलनाशनं ॥ २२४ ॥
भजनं पूजनं सेवामिच्छेदेतेषु सर्वदा ।

न ज्ञायते ब्रह्मतेजः कस्मिन् कीदृक् प्रतिष्ठितं ॥ २२५॥ ॥
पराधीनं नैव कुर्यात् तरुणीधनपुस्तकं ।
कृतं चेल्लभ्यते दैवाद्भ्रष्टं नष्टं विमर्दितं ॥ २२६॥ ॥
बह्वर्थं न-त्यजेदल्पहेतुनाल्पं न साधयेत् ।
बह्वर्थव्ययतो धीमानभिमानेन वै क्वचित् ॥ २२७॥ ॥
बह्वर्थव्ययभीत्या तु सत्कीर्तिं न त्यजेत् सदा ।
भटानामसदुक्त्या तु नेर्ष्येत् कुप्यान्न तैस्सह ॥ २२८॥ ॥
लज्ज्यते च सुहृद्येन भिद्यते दुर्मना भवेत् ।
वक्तव्यं न तथा किंचिद्विनोदेऽपि च धीमता ॥ २२९॥ ॥
[यस्मिन् सूक्तं दुरुक्तं च समं स्याद्वा निरर्थकं ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ २३०॥ ॥
व्यसने सज्जमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ २३१॥ ॥
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं विदुर्बुधाः] ॥ २३२॥ ॥
आजन्मसेवितं दानैर्मानैश्च परिपोषितं ।
तीक्ष्णवाक्यान्मित्रमपि तत्कालं याति शत्रुतां ॥ २३३॥ ॥
वक्रोक्तिशल्यमुद्धर्तुं न शक्यं मानसं यतः ।
वहेदमित्रं स्कंधेन यावत् स्यात् स्वबलाधिकः ।
ज्ञात्वा नष्टबलं तं तु भिद्याद्घटमिवाश्मनि ॥ २३५ ॥
न भूषयत्यलंकारो न राज्यं न च पौरुषं ।
न विद्या न धनं तादृग्यादृक् सौजन्यभूषणं ॥ २३६ ॥
अश्वे जवो वृषे धौर्यं मणौ कांतिः क्षमा नृपे ।
हावभावौ च वेश्यायां गायके मधुरस्वरः ॥(२३७)॥

दातृत्वं धनिके शौर्यं सैनिके बहुदुग्धता।
गोषु दमस्तपस्विषु विद्वत्सु वावदूकता ॥(२३८)॥
सभ्येष्वपक्षपातस्तु तथा साक्षिषु सत्यवाक्।
अनन्यभक्तिर्भृत्येषु सुहितोक्तिश्च मंत्रिषु ॥(२३९)॥
मौनं मूर्खेषु च स्त्रीषु पातिव्रत्यं सुभूषणं।
महाद्भूषणं चैतद्विपरीतममीषु च ॥ २४० ॥
गृहं बहुकुटुंबेन दीपैर्गोभिस्सुबालिशैः।
भात्येकनायकं नित्यं नैव निर्बहुनायकं ॥ २४१ ॥
न च हिंस्रमुपेक्षेत शक्तो हन्याच्च तत्क्षणे ॥ २४१ ॥
पैशुन्यं चंडता चौर्यं मात्सर्यमतिलोभता।
असत्यं कार्यघातित्वं तथालसकताप्यलं।
गुणिनामपि दोषाय गुणानाच्छाद्य जायते ॥ २४३ ॥
मातुः प्रियायाः पुत्रस्य धनस्य च विनाशनं।
बाल्ये मध्ये च वार्द्धक्ये महापापफलं क्रमात् ॥ २४४ ॥
श्रीमतामनपत्यत्वमधनानां च मूर्खता।
स्त्रीणां षंडपतित्वं च न सौख्यायेष्टानिर्गमः ॥ २४५ ॥
मूर्खः पुत्रोऽथवा कन्या चंडी भार्या दरिद्रता।
नीचसेवा ऋणं नित्यं नैतत्षट्कं सुखाय च ॥ २४६ ॥
नाध्यापने नाध्ययने न देवे न गुरौ द्विजे।
न कलासु न संगीते सेवायां नार्जवे स्त्रियां ॥(२४७)॥
न शौर्ये न च तपसि साहित्ये रमते मनः।
यस्य मुक्तः खलः किं वा नररूपपशुश्च सः ॥ २४८ ॥
अन्योदयासहिष्णुश्च छिद्रदर्शी विनिंदकः।
द्रोहशीलस्स्वान्तमलः प्रसन्नास्यः खलस्स्मृतः ॥ २४९ ॥

एकस्यैव न पर्याप्तमस्ति यद्ब्रह्मकोशजं।
आशया वर्द्धितस्यास्ति तस्याल्पमपि पूर्तिकृत् ॥ २५० ॥
करोत्यकार्यं साशोऽन्यं बोधयत्यनुमोदते ॥ २५० ॥
भवंत्यन्योपदेशार्थे धूर्तास्साधुसमास्सदा।
स्वकार्यार्थं प्रकुर्वन्ति ह्यकार्याणां शतं तु ते ॥ २५१ ॥
पित्रोराज्ञां पालयति सेवने च निरालसः।
छायेव वर्तते नित्यं यतते चागमाय वै ॥(२५२)॥
कुशलस्सर्वविद्यासु स पुत्रः प्रीतिकारकः।
दुःखदो विपरीतो यो दुर्गुणी धननाशकः ॥ २५३ ॥
पत्यौ नित्यं चानुरक्ता कुशला गृहकर्मणि।
पुत्रप्रसूस्सुशीला या प्रिया पत्युस्सुयौवना ॥ २५४ ॥
पुत्रापराधान् क्षमते या पुत्रपरिपोषिणी।
सा माता प्रीतिदा नित्यं कुलटान्यातिदुःखदा ॥ २५५ ॥
विद्यागमार्थं पुत्रस्य वृत्त्यर्थं यतते च यः।
पुत्रं सदा साधु शास्ति प्रीतिकृत् स पितानृणी ॥ २५६ ॥
यस्सहायं सदा कुर्यात् प्रतीपं न वदेत् क्वचित्।
सत्यं हितं वक्ति याति दत्ते गृह्णाति मित्रतां ॥ २५७ ॥
नीचस्यातिपरिचयो ह्यन्यगेहे सदा गतिः।
जातौ संघे प्रातिकूल्यं मानहान्यै दरिद्रता ॥ २५८ ॥
व्याघ्राग्निसर्पहिंस्राणां न हि संघर्षणं हितं।
सेवितत्वाचु राज्ञो नैते मित्राः कस्य सन्ति किं ॥ २५९ ॥
दौर्मनस्यं च सुहृदां सुप्राबल्यं रिपोस्सदा।
विद्वत्स्वपि च दारिद्र्यं दारिद्र्ये बहुपत्यता ॥(२६०)॥
धनिगुणिवैद्यनृपजलहीने सदा स्थितिः।

दुःखाय कन्यकाप्येका पित्रोरपि च याचनं ॥ २६१ ॥
सुरूपस्सधनस्स्वामी विद्वानपि बलाधिकः ।
न कामयेद्यथेष्टं यस्त्रीणां नैव सुसौख्यकृत् ॥ २६२ ॥
यो यथेष्टं कामयते स्त्री तस्य वशगा भवेत् ।
संधारणाल्लालनाच्च यथा याति वशं शिशुः ॥ २६३ ॥
कार्यं तत्साधकार्दीश्च तद्व्ययं सुविनिर्गमं ।
विचिंत्य कुरुते ज्ञानी नान्यथा लघ्वपि क्वचित् ॥ २६४ ॥
न च व्ययाधिकं कार्यं कर्तुमीहेत पंडितः ।
लाभाधिक्यं यत् क्रियते स सेवेद्व्यवसायिभिः ॥ २६५ ॥
मूल्यं मानं च पण्यानां याथात्म्यान्मृग्यते सदा ।
तपस्त्रीकपिसेवासूपभोग्ये नापि भक्षणे ॥ २६६ ॥
हितः प्रतिनिधिर्नित्यं कार्येऽन्ये तं नियोजयेत् ।
निर्जनत्वं मधुरभुग्जारश्चोरस्सदेच्छति ॥(२६७)॥
साहाय्यं तु बलिद्विष्टो वेश्या धनिकामित्रतां ।
कुनृपश्च छलं नित्यं स्वामिद्रव्यं कुसेवकः ॥(२६८)॥
तत्त्वं तु ज्ञानवान्दंभं तपोऽग्निं देवजीवकः ।
योग्या कांतं च कुलटा जारं वैद्यं च व्याधितः ॥(२६९)॥
धृतपण्यो महार्घत्वं दानशीलं तु याचकः ।
रक्षितारं मृगयते भीतश्छिद्रं तु दुर्जनः ॥ २७० ॥
चंडायते विवदते स्वपित्यश्नाति मादकं ।
करोति निष्फलं कर्म मूर्खो वा स्वेष्टनाशनं ॥ २७१ ॥
तमोगुणाधिकं क्षात्रं ब्राह्मं सत्त्वगुणाधिकं ।
अन्यद्रजोऽधिकं तेजस्तेषु सत्त्वाधिकं वरं ॥ २७२ ॥
सर्वाधिको ब्राह्मणस्तु जायते हि स्वकर्मणा ।

तत्तेजसोऽनुतेजांसि संति च क्षात्रियादिषु ॥ २७३ ॥
स्वधर्मस्थं ब्राह्मणं हि दृष्ट्वा विभ्यति चेतरे।
क्षात्रियादिर्नान्यथा स्वधर्मं चातस्समाचरेत् ॥ २७४ ॥
न स्यात् स्वधर्महानिस्तु यया वृत्त्या च सा वरा।
स देशः प्रवरो यत्र कुटुंबपरिपोषणं ॥ २७५ ॥
कृषिस्तु चोत्तमा वृत्तिर्या सरिन्मातृका मता।
मध्यमा वैश्यवृत्तिश्च शूद्रवृत्तिस्तु चाधमा ॥ २७६ ॥
याच्ञाधमतरा वृत्तिर्ह्युत्तमा सा तपस्विषु।
क्वचित् सेवोत्तमा वृत्तिर्धर्मशीलनृपस्य च ॥ २७७ ॥
आध्वर्य्यवादिकं कर्म कृत्वा या गृह्यते भृतिः।
सा किं महाधनायैव वाणिज्यमलमेव किं ॥ २७८ ॥
राजसेवां विना द्रव्यं विपुलं नैव जायते।
राजसेवातिगहना बुद्धिमद्भिर्विना न सा।
कर्तुं शक्या चेतरेण ह्यसिधारेव सा सदा ॥ २८० ॥
व्यालग्राही यथा व्यालं मंत्री मंत्रबलान्नृपं।
करोत्यधीनं तु नृपे भयं बुद्धिमतां महत् ॥ २८१ ॥
ब्राह्मं तेजो बुद्धिमत्सु क्षात्रं राज्ञि प्रतिष्ठितं।
आरादेव सदा चास्ति तिष्ठन् दूरेऽपि बुद्धिमान् ॥(२८२)॥
बुद्धिपाशैर्बन्धयित्वा संताडयति कर्षति।
समीपस्थोऽपि दूरेऽस्ति ह्यप्रत्यक्षसहायवान् ॥ २८३ ॥
नानुवाकहता बुद्धिर्व्यवहारक्षमा भवेत्।
अनुवाकहता या तु न सा सर्वत्रगामिनी ॥ २८४ ॥
आदौ वरं निर्धनत्वं धनिकत्वमनंतरं।
तथादौ पादगमनं यानगत्वमनंतरं।

सुखाय कल्पते नित्यं दुःखाय विपरीतकं ॥ २८५ ॥
वरं हि त्वनपत्यत्वं मृतापत्यत्वतस्सदा ।
दुष्टयानात् पादगमो ह्यौदासीन्यं विरोधतः ॥ २८६ ॥
वरं देशाच्छादनतश्चर्मणा पादगूहनं ।
ज्ञानलवदौर्विदग्ध्यादज्ञता प्रवरा मता ॥ २८७ ॥
परगृहनिवासाद्ध्यरण्ये निवसनं वरं ।
प्रदुष्टभार्यागार्हस्थ्याद्भैक्ष्यं वा मरणं वरं ॥ २८८ ॥
श्वमैथुनमृणं गर्भाधानं स्वामित्वमेव च ।
खलसख्यमपथ्यं तु प्राक्सुखं दुःखनिर्गमं ॥ २८९ ॥
कुमंत्रिभिर्नृपो रोगी कुवैद्यैः कुनृपैः प्रजा ।
कुसंतत्या कुलं चात्मा कुबुद्ध्या हीयतेऽनिशं ॥ २९० ॥
हस्त्यश्ववृषबालस्त्रीशुकानां शिक्षको यथा ।
तथा भवंति ते नित्यं संसर्गगुणधारकाः ॥ २९१ ॥
स्याज्जयोऽवसरोक्त्या सद्व्यसनैस्सुप्रसिद्धता ।
सभायां विद्यया मानस्त्रितयं त्वधिकारतः ॥ २९२ ॥
सुभार्या सुष्ठु चापत्यं सुविद्या सुधनं सुहृत् ।
सुदासदास्यौ सद्देहस्सद्वेश्म सुनृपस्सदा ।
गृहिणां हि सुखायालं दशैतानि न चान्यथा ॥ २९४ ॥
वृद्धास्सुशीला विश्वस्तास्सदाचारास्स्त्रियो नराः ।
क्लीवा वान्तःपुरे योज्या न युवा मित्रमप्युत ॥ २९५ ॥
कालं नियम्य कार्याणि ह्याचरेन्नान्यथा क्वचित् ।
गवादिष्वात्मवज्ज्ञानमात्मानं चार्थधर्मयोः ।
नियुंजीतान्नसंसिद्ध्यै मातरं शिक्षणे गुरुं ॥ २९६ ॥
गच्छेदनियमेनैव सदैवान्तःपुरं नरः ॥ २९७ ॥

भार्यानपत्या सद्यानं भारवाही सुरक्षकः ।
परदुःखहरा विद्या सेवकश्च निरालसः ।
षडेतानि सुखायालं प्रवासे तु नृणां सदा ॥ २९८॥ ॥
मार्गं निरुध्य न स्थेयं समर्थेनापि कर्हिचित् ।
सद्यानेनापि गच्छेन्न हट्टमार्गे नृपोऽपि च ॥ २९९॥ ॥
ससाहायस्सदा च स्यादध्वगो नान्यथा क्वचित् ।
समीपसन्मार्गजलाभयग्रामेऽध्वगो वसेत् ॥ ३००॥ ॥
तथाविधे वा विरमेन्न मार्गे विपिनेऽपि न ॥ ३०१ ॥
अत्यटनं चानशनमतिमैथुनमेव च ।
अत्यायासश्च सर्वेषां द्राग्जराकरणं महत् ॥ ३०२ ॥
सर्वविद्यास्वनभ्यासो जराकारी कलासु च ॥ ३०२॥ ॥
दुर्गुणं तु गुणीकृत्य कीर्तयेत् स प्रियो भवेत् ।
गुणाधिक्यं कीर्तयति यः किं स्यान्न पुनस्सखा ॥ ३०३॥ ॥
दुर्गुणं वक्ति सत्येन प्रियोऽपि सोऽप्रियो भवेत् ।
गुणं हि दुर्गुणीकृत्य वक्ति यस्स्यात् कथं प्रियः ॥ ३०४॥ ॥
स्तुत्या वशं यान्ति देवा ह्यञ्जसा किं पुनर्नराः ।
प्रत्यक्षं दुर्गुणान्नैव वक्तुं शक्नोति कोऽप्यतः ॥ ३०५॥ ॥
स्वदुर्गुणान् स्वयं चातो विमृशेल्लोकशास्त्रतः ।
स्वदुर्गुणश्रवणतो यस्तुष्यति न क्रुध्यति ॥(३०६॥)॥
स्वोपहासप्राविज्ञाने यतते त्यजति श्रुते ।
स्वगुणश्रवणान्नित्यं समास्तिष्ठति नाधिकः ॥(३०७॥)॥
दुर्गुणानां खनिरहं गुणाधानं कथं मयि ।
मय्येव चाज्ञताप्यस्ति मन्यते सोऽधिकोऽखिलात् ॥ ३०८॥ ॥
स साधुस्तस्य देवा हि कलालेशं लभंति न ॥ ३०९ ॥

सदाल्पमप्युपकृतं महत् साधुषु जायते।
मन्यते सर्षपादल्पं महच्चोपकृतं खलः ॥ ३१० ॥
क्षमिणं बलिनं साधुर्मन्यते दुर्जनोऽन्यथा।
दुरुक्तमप्यतस्साधोः क्षमयेद्दुर्जनस्य च ॥ ३११ ॥
तथा न क्रीडयेत् कैश्चित् कलहाय भवेद्यथा।
विनोदेऽपि शपेन्नैवं ते भार्या कुलटास्ति किं ॥ ३१२ ॥
अपशब्दाश्च नो वाच्या मित्रभावाच्च केष्वपि।
गोप्यं न गोपयेन्मित्रे तद्गोप्यं न प्रकाशयेत् ॥ ३१३ ॥
वैरीभूतोऽपि पश्चात् प्राक्कथितं वापि सर्वदा।
विज्ञातमपि यद्गोप्यं दर्शयेत्तन्न कर्हिचित् ॥ ३१४ ॥
प्रतिकर्तुं यतेतैव गुप्तः कुर्यात् प्रतिक्रियां।
यथार्थमपि न ब्रूयाद्बलवद्विपरीतकं ॥ ३१५ ॥
दृष्टं त्वदृष्टवत् कुर्याच्छ्रुतमप्यश्रुतं क्वचित्।
मूकोऽधो बधिरः खंजस्त्वापत्काले भवेन्नरः ॥(३१६)॥
अन्यथा दुःखमाप्नोति हीयते व्यवहारतः।
वदेद्वृद्धानुकूलं यन्न बालसदृशं क्वचित् ॥ ३१७ ॥
परवेश्मगतस्तत्स्त्रीवीक्षणं न च कारयेत्।
अधनादननुज्ञातान्न गृह्णीयात्तु स्वामिनां ॥ ३१८ ॥
स्वशिशुं शिक्षयेदन्यशिशुं नाप्यपराधिनं ॥ ३१८ ॥
अधर्मनिरतो यस्तु नीतिहीनश्चलान्तरः।
संकर्षकोऽतिदंडी तद्ग्रामं त्यक्त्वान्यतो वसेत् ॥ ३१९ ॥
यथार्थमपि विज्ञातमुभयोर्वादिनोर्मतं।
अनियुक्तो न वै ब्रूयाद्धीनश्शत्रुर्भवेदतः ॥ ३२० ॥
गृहीत्वान्यविवादं तु विवदेन्नैव केनचित्।

मिलित्वा संघशो राजमंत्रं नैव तु तर्कयेत्  ॥ ३२१ ॥
अज्ञातशास्त्रो न ब्रूयाज्ज्यौतिषं धर्मनिर्णयं ।
नीतिं दंडं चिकित्साञ्च प्रायश्चित्तं क्रियाफलं  ॥ ३२२ ॥
पारतंत्र्यात् परं दुःखं न स्वातन्त्र्यात् परं सुखं ।
अप्रवासी गृही नित्यं स्वतन्त्रस्सुखमेधते  ॥ ३२३ ॥
नूतनप्राक्तनानां च व्यवहारविदां धिया ।
प्रतिक्षणं चाभिनवो व्यवहारो भवेदतः  ॥(३२४)॥
वक्तुं न शक्यते प्रायः प्रत्यक्षादनुमानतः ।
उपमानेन तज्ज्ञानं भवेदाप्तोपदेशतः  ॥ ३२५ ॥
कथितं तु समासेन सामान्यं नृपराष्ट्रयोः ।
नीतिशास्त्रं हितायालं यद्विशिष्टं नृपे स्मृतं  ॥ ३२६ ॥

---

इति शुक्रनीतौ नृपराष्ट्रसामान्यलक्षणं नाम ततीयोऽध्यायः

---

श्रीः

--

# शु क्र नी तिः

...

## चतुर्थेऽध्याये प्रथमं प्रकरणं

अथ मिश्रप्रकरणं प्रवक्ष्यामि समासतः।
लक्षणं सुहृदादीनां समासाच्छृणुताधुना ॥ १ ॥
मित्रशत्रुश्चतुर्धा स्यादुपकारापकारयोः।
कर्ता कारयिता चानुमंता यश्च सहायकः ॥ २ ॥
यस्य सुद्रवते चित्तं परदुःखेन सर्वदा।
इष्टार्थे यततेऽन्यस्याप्रेरितस्सत्करोति यः ॥(३)॥
आत्मस्त्रीधनगुह्यानां शरणं समये सुहृत्।
प्रोक्तोत्तमोऽयमन्यश्च त्रिद्व्येकपदमित्रकः ॥ ४ ॥
अनन्यस्वत्वकामत्वमेकस्मिन् विषये द्वयोः।
वैरिलक्षणमेतद्वान्येष्टनाशनकारिता ॥ ५ ॥
भ्रातृभावे पितृद्रव्यमखिलं मम वै भवेत्।
न स्यादेतस्य वश्येऽगं ममैव स्यात् परस्परं ॥(६)॥
भोक्ष्येऽखिलमहं चैते ान्यं स्तस्सुवैरिणौ।
द्वेष्टि द्विष्ट उभौ शत्रू ौकतरसंज्ञकौ ॥ ७ ॥
शूरस्योत्थानशीलस्य बलनीतिमतस्सदा।
सर्वेऽमित्रा गूढवैरा नृपाः कालप्रतीक्षकाः ॥(८)॥
भवंतीति किमाश्चर्यं राज्यलुब्धा न ने हि किं।
न राज्ञो विद्यते मित्रं राजा मित्रं न कस्य वै ॥ ९ ॥

प्रायः कृत्रिममित्रे ते भवतश्च परस्परं ।
केचित् स्वभावतो मित्राश्शत्रवस्संति सर्वदा ॥ १० ॥
माता मातृकुलं चैव पिता तत्पितरौ तथा।
पितृपितृव्यात्मकन्या पत्नी तत्कुलमेव हि ॥(११)॥
पितृमात्रात्मभगिनीकन्यकासंततिश्च या।
प्रजापालो गुरुश्चैव मित्राणि सहजानि हि ॥ १२ ॥
विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पंचमं।
मित्राणि सहजान्याहुर्वर्तयंति हि तैर्बुधाः ॥ १३ ॥
पित्रोर्निदेशवर्ती यस्स पुत्रोऽन्वर्थनामवान्।
श्रेष्ठ एकस्तु गुणवान् किं शतैरपि निर्गुणैः ॥ १४ ॥
स्वभावतो भवंत्येते हिंस्रो दुर्वृत्त एव च।
ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी ॥(१५)॥
आत्मपितृभ्रातरश्च तत्स्त्रीपुत्राश्च शत्रवः।
स्नुषा श्वश्रूस्सपत्नी च ननांदा यातरस्तथा ॥(१६)॥
मूर्खः पुत्रः कुवैद्यश्चारक्षकस्तु पतिः प्रभुः।
चंडो भवेत् प्रजाशत्रुरदाता धनिकश्च यः ॥ १७ ॥
[दुष्टानां नृपतिश्शत्रुः कुलटानां पतिव्रता ।
साधुः खलानां शत्रुस्स्यान्मूर्खाणां बोधको रिपुः ॥ १८ ॥
उपदेशो हि मूर्खाणां क्रोधायैव शमाय न।
पयःपानं भुजंगानां विषायैवामृताय न] ॥ २९ ॥
आसमंताच्चतुर्दिक्षु सन्निकृष्टाश्च ये नृपाः।
तत्परास्तत्परा येऽन्ये क्रमाद्धीनबलारयः ॥ १० ॥
शत्रूदासीनमित्राणि क्रमात्ते स्युस्तु प्राकृताः।
अरिर्मित्रमुदासीनोऽनंतरस्तत्परः परः ॥ २१ ॥

क्रमशो वा नृपा ज्ञेयाश्चतुर्दिक्षु तथारयः ।
स्वसमीपतरा भृत्या ह्यमात्याद्याश्च कर्षिताः ॥ २२ ॥
बृंहयेत् कर्पयेन्मित्रं हीनाधिकबलं क्रमात् ।
भेदनीयाः कर्षणीयाः पीडनीयाश्च शत्रवः ॥ २३ ॥
विनाशनीयास्ते सर्वे सामादिभिरुपक्रमैः ।
मित्रं शत्रुं यथायोग्यैः कुर्यात् स्ववशवर्तिनं ॥ २४ ॥
उपायेन यथा व्यालो गजस्सिंहोऽपि साध्यते ।
भूमिष्ठास्स्वर्गमायान्ति वज्रं भिन्दंत्युपायतः ॥ २५ ॥
सुहृत्संबंधिस्त्रीपुत्रप्रजाशत्रुषु ते पृथक् ।
सामदानभेददंडाश्चिन्तनीयास्स्वयुक्तितः ॥ २६ ॥
एकशीलवयोविद्याजातिव्यसनवृत्तयः ।
साहचर्यं भवेन्मित्रमेभिर्यदि तु सार्जवैः ॥ २७ ॥
त्वत्समस्तु सखा नास्ति मित्रे साम इदं स्मृतं ।
मम सर्वं तवैवास्ति दानं मित्रे सजीवितं ॥ २८ ॥
मित्रेऽन्यमित्रसुगुणान्-कीर्तयेद्भेदनं हि तत् ।
मित्रे दंडो न करिष्ये मैत्रीमेवंविधोऽसि चेत् ॥ २९ ॥
यो न संयोजयेदिष्टमन्यानिष्टमुपेक्षते ।
उदासीनस्स न कथं भवेच्छत्रुस्सुसांधिकः ॥ ३० ॥
परस्परमनिष्टं न चिंतनीयं त्वया मया ।
सुसाहाय्यं हि कर्तव्यं शत्रौ साम प्रकीर्तितं ॥ ३१ ॥
करैर्वा प्रमितैर्ग्रामैर्वत्सरे प्रबलं रिपुं ।
तोपयेत् तद्धि दानं स्याद्यथायोग्येषु शत्रुषु ॥ ३२ ॥
शत्रुसाधकहीनत्वकरणात् प्रबलाश्रयात् ।
तद्धीनतोज्जीवनाच्च शत्रुभेदनमुच्यते ॥ ३३ ॥

दस्युभिः पीडनं शत्रोः कर्षणं धनधान्यतः ।
तच्छिद्रदर्शनादुग्रबलैर्नीत्या प्रभीषणं ।
प्राप्तयुद्धानिवृत्तित्वैस्त्रासनं दंड उच्यते ॥ ३४″ ॥
क्रियाभेदादुपाया हि भिद्यंते च यथार्हतः ॥ ३५ ॥
सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।
यथा स्वाम्यधिका न स्युर्मित्रोदासीनशत्रवः ॥ ३६ ॥
सामैव प्रथमं श्रेष्ठं दानं तु तदनंतरं ।
सर्वदा भेदनं शत्रोर्दण्डनं प्राणसंशये ॥ ३७ ॥
प्रबलेऽरौ सामदानौ साम भेदोऽधिके स्मृतौ ।
भेददंडौ समे कार्यौ दंडः पूज्यः प्रहीनके ॥ ३८ ॥
मित्रे च सामदानौ स्तो न कदा भेददंडने ।
रिपोः प्रजानां संभेदपीडनं स्वजयाय वै ॥ ३९ ॥
रिपुप्रपीडितानां च साम्ना दानेन संग्रहः ।
गुणवतां च दुष्टानां हितं निर्वासनं सदा ॥ ४० ॥
स्वप्रजानां न भेदेन नैव दंडेन पालनं ।
कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः ॥ ४१ ॥
स्वप्रजादण्डभेदैश्च भवेद्राज्यविनाशनं ।
हीनाधिका यथा न स्युस्सदा रक्ष्यास्तथा प्रजाः ॥ ४२ ॥
निवृत्तिरसदाचाराद्दमनं दंडतश्च तत् ।
येन संदम्यते जंतुरुपायो दंड एव सः ॥ ४३ ॥
स उपायो नृपाधीनस्स सर्वस्य प्रभुर्यतः ॥ ४३″॥
निर्भत्सनं चापमानोऽनशनं बंधनं तथा ।
ताडनं द्रव्यहरणं पुरान्निर्वासनांकने ॥(४४″)॥
व्यस्तक्षौरमसद्यानमंगच्छेदो वधस्तथा ।

युद्धमेते ह्युपायाश्च दंडस्यैव प्रभेदकाः ॥ ४५ ॥
जायते धर्मनिरता प्रजा दंडभयेन च ।
करोत्याधर्षणं नैव तथा चासत्यभाषणं ॥(४६)॥
क्रूराश्च मार्दवं यांति दुष्टा दौष्ट्यं त्यजंति च ।
पशवोऽपि वशं यान्ति विद्रवंति च दस्यवः ॥(४७)॥
पिशुना मूकतां यान्ति भयं यांत्याततायिनः ।
करदाश्च भवंत्यन्ये वित्रासं यान्ति चापरे ।
अतो दंडधरो नित्यं स्यान्नृपो धर्मरक्षणे ॥ ४९ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनं ॥ ५० ॥
राज्ञां सदंडनीत्या हि सर्वे सिध्यंत्युपक्रमाः ।
दंड एव हि धर्माणां शरणं परमं स्मृतं ॥ ५१ ॥
अहिंसैवासाधुहिंसा पशुवच्छ्रुतिचोदनात् ।
दंड्यस्यादंडनान्नित्यमदंड्यस्य च दंडनात् ।
अतिदंडाच्च गुणिभिस्त्यज्यते पातकी भवेत् ॥ ५२ ॥
अल्पदानान्महत्पुण्यं दंडप्रणयनात्फलं ।
शास्त्रेषूक्तं मुनिवरैः प्रवृत्त्यर्थं भयाय च ॥ ५३ ॥
अश्वमेधादिभिः पुण्यं तत् किं स्यात् स्तोत्रपाठतः ।
क्षमया यत्तु पुण्यं स्यात् तत् किं दंडनिपातनात् ॥ ५४ ॥
स्वप्रजादंडनाच्छ्रेयः कथं राज्ञो भविष्यति ।
तद्दंडाज्जायते कीर्तिधनपुण्यविनाशनं ॥ ५५ ॥
नृपस्य धर्मपूर्णत्वाद्दंडः कृतयुगे न हि ।
त्रेतायुगे पूर्णदंडः पादाधर्माः प्रजा यतः ॥(५६)॥
द्वापरे चार्धधर्मत्वात् त्रिपाद्दंडो विधीयते ।

प्रजा निस्स्वा राजदैष्ट्याद्दंडार्धं तु कलौ यथा ॥ ५७॥ ॥
युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ।
युगानां न प्रजानां न दोषः किंतु नृपस्य हि ॥ ५८॥ ॥
प्रसन्नो येन नृपतिस्तदाचरति वै जनः ।
लोभाद्भयाच्च किं तेन शिक्षितं नाचरेत् कथं ॥ ५९॥ ॥
सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः ।
महापापी यत्र राजा तत्राधर्मपरो जनः ॥(६०॥)॥
न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला ।
जायते राष्ट्रह्रासश्च शत्रुवृद्धिर्धनक्षयः ॥ ६१॥ ॥
सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान् ।
लोकांश्चंडस्तापयति स्त्रैणो वर्णान् विलुंपति ।
मद्यप्येकश्च भ्रष्टस्स्याद्बुद्ध्या च व्यवहारतः ॥ ६३ ॥
कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ।
धनप्राणहरो राजा पजायाश्चातिलोभतः ।
तस्मादेतत्त्रयं त्यक्त्वा दंडधारी भवेन्नृपः ॥ ६४॥ ॥
अन्तर्मृदुर्वहिः क्रूरो भूत्वा स्वां दंडयेत् प्रजां ।
अत्युग्रदंडकल्पस्स्यात् स्वभावाहितकारिणः ॥ ६५॥ ॥
राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः ।
अतो नृपस्सूचितोऽपि विमृशेत् कार्यमादरात् ॥ ६६॥ ॥
आत्मनश्च प्रजायाश्च दोषदर्श्युत्तमो नृपः ।
विनियच्छति चात्मानमादौ भृत्यांस्ततः प्रजाः ॥ ६७॥ ॥
कायिको वाचिको मानसिकस्सांसर्गिकस्तथा ।
चतुर्विधोऽपराधस्स बुद्ध्यबुद्धिकृतो द्विधा ॥(६८॥)॥
पुनर्द्विधा कारितश्च तथा ज्ञेयोऽनुमोदितः ।

सकृदसकृदभ्यस्तस्वभावैस्त चतुर्विधः ॥ ६९ ॥
नेत्रवक्त्रविकाराद्यैर्भावैर्मानसिकं तथा ।
क्रियया कायिकं वीक्ष्य वाचिकं क्रूरशब्दतः ॥(७०)॥
सांसर्गिकं साहचर्यैर्ज्ञात्वा गौरवलाघवं ।
उत्पन्नोत्पत्स्यमानानां कार्याणां दंडमावहेत् ॥ ७१ ॥
प्रथमं साहसं कुर्वन्नुत्तमो दंडमर्हति ।
न्याय्यं किमिति संपृच्छेत् तवैवेयमसत्कृतिः ।
उपहासं यथोक्तं च द्विगुणं त्रिगुणं ततः ॥ ७२ ॥
मध्यमं साहसं कुर्वन्नुत्तमो दंडमर्हति ।
धिग्दंडं प्रथमं चाद्यसाहसं तदनन्तरं ।
यथोक्तं तु तथा सम्यग्यथावृद्धि ह्यनंतरं ॥ ७४ ॥
उत्तमं साहसं कुर्वन्नुत्तमो दंडमर्हति ।
प्रथमं साहसं चादौ मध्यमं तदनंतरं ॥(७५)॥
यथोक्तं द्विगुणं पश्चादवरोधं ततः परं ।
बुद्धिपूर्वनृघातेन विनैतद्दंडकल्पनं ॥ ७६ ॥
उत्तमत्वं मध्यमत्वं नीचत्वं चात्र कीर्त्यते ।
गुणेनैव तु मुख्यं हि कुलेनापि धनेन च ॥ ७७ ॥
प्रथमं साहसं कुर्वन् मध्यमो दंडमर्हति ।
धिग्दंडमर्धदंडं च पूर्णदंडमनुक्रमात् ।
द्विगुणं त्रिगुणं पश्चात् संरोधं नीचकर्म च ॥ ७८ ॥
मध्यमं साहसं कुर्वन् मध्यमो दंडमर्हति ।
पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः ।
ताडनं बन्धनं पश्चात् पुरान्निर्वासनाङ्कने ॥ ८० ॥
उत्तमं साहसं कुर्वन् मध्यमो दंडमर्हति ।

मध्यमं साहसं चादौ यथोक्तं तदनंतरं ।
द्विगुणं त्रिगुणं पश्चाद्यावज्जीवं तु बंधनं ॥ ८२ ॥
प्रथमं साहसं कुर्वन्नधमो दंडमर्हति ।
अर्धं यथोक्तं द्विगुणं त्रिगुणं बंधनं ततः ॥ ८३ ॥
मध्यमं साहसं कुर्वन्नधमो दंडमर्हति ।
पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः ।
ततस्संरोधनं नित्यं मार्गसंस्करणार्थकं ॥ ८४ ॥
उत्तमं साहसं कुर्वन्नधमो दंडमर्हति ।
मध्यमं साहसं चादौ यथोक्तं द्विगुणं ततः ।
यावज्जीवं बंधनं च नीचकर्मैव केवलं ॥ ८६ ॥
हरेत् पादं धनात् तस्य यः कुर्याद्धनगर्वतः ।
पूर्वं ततोऽर्धमखिलं यावज्जीवं तु बंधनं ॥ ८७ ॥
सहायगौरवाद्विद्यामदाच्च बलदर्पतः ।
पापं करोति यस्तं तु बंधयेत् ताडयेत् सदा ॥ ८८ ॥
भार्या पुत्रश्च भगिनी शिष्यो दासस्स्नुषानुजः ।
कृतापराधास्ताड्यास्ते तनुरज्जुसुवेणुभिः ॥(८९)॥
पृष्ठतस्तु शरीरस्य नोत्तमांगे कथंचन ।
अतोऽन्यथा तु प्रहरंश्चोरवद्दंडमर्हति ॥ ९० ॥
नीचकर्मकरं कुर्याद्बंधयित्वा तु पापिनं ।
मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरं ।
यावज्जीवं तु वा कश्चिन्न कश्चिद्वधमर्हति ॥ ९१ ॥
न निहन्याच्च भूतानि त्विति जागर्ति वै श्रुतिः ।
तस्मात् सर्वप्रयत्नेन वधदंडं त्यजेन्नृपः ।
अवरोधाद्बंधनेन ताडनेन च कर्षयेत् ॥ ९२ ॥

लोभान्न कर्षयेद्राजा धनदंडेन वै प्रजां ।
नासहायास्तु पित्राद्या दंड्यास्स्युरपराधिनः ॥ ९४ ॥
क्षमाशीलस्य वै राज्ञो दंडग्रहणमीदृशं ।
नापराधं तु क्षमते प्रदंडो धनहारकः ।
नृपो यदा तदा लोकः क्षुभ्यते भिद्यते परैः ॥ ९५ ॥
अतस्सुभागदंडी स्यात् क्षमावान् रंजको नृपः ॥ ९६ ॥
मद्यपः कितवस्स्तेनो जारश्चंडश्च हिंसकः ।
त्यक्तवर्णाश्रमाचारो नास्तिकश्शठ एव हि ॥(९७)॥
मिथ्याभिशापकः कर्णेजपार्यदेवदूषकौ ।
असत्यवाङ्न्यासहारी तथा वृत्तिविघातकः ॥(९८)॥
अन्योदयासहिष्णुश्च ह्युत्कोचग्रहणे रतः ।
अकार्यकर्ता मंत्राणां कार्याणां भेदकस्तथा ॥(९९)॥
अनिष्टवाक् परुषवाग्जलारामप्रबाधकः ।
नक्षत्रसूची राजद्विट् कुमंत्री कूटकार्यवित् ॥(१००)॥
कुवैद्यामंगलाशौचशीला मार्गनिरोधकाः ।
कुसाक्ष्युद्धतवेषश्च स्वामिद्रोही व्ययाधिकः ॥(१०१)॥
अग्निदो गरदो वेश्यासक्तः प्रबलदंडकृत् ।
तथा पाक्षिकसभ्यश्च बलाल्लिखितग्राहकः ॥(१०२)॥
अन्यायकारी कलहशीलो युद्धे पराङ्मुखः ।
साक्ष्यलोपी पितृमातृसतीस्त्रीमित्रद्रोहकः ॥(१०३)॥
असूयकश्शत्रुसेवी मर्मभेदी च वंचकः ।
स्वकीयद्विड्गुप्तवृत्तिर्नृपलो ग्रामकंटकः ॥(१०४)॥
विना कुटुंबभरणात्तपोविद्यार्थिनं सदा ।
तृणकाष्ठादिहरणे शक्तस्त्सन् भैक्ष्यभोजकः ॥(१०५)॥

कन्याया अपि विक्रेता कुटुंबवृत्तिह्रासकः ।
अधर्मासूचकश्चापि राजानिष्टमुपेक्षकः ॥(१०६)॥
कुलटा पतिपुत्रघ्नी स्वतंत्रा वृद्धानिंदिता ।
गृहकृत्योज्झिता नित्यं दुष्टाचाराप्रियस्नुषा ।
स्वभावदुष्टानेतान् हि ज्ञात्वा राष्ट्राद्विवासयेत् ॥ १०७ ॥
द्वीपे निवासितव्यास्ते बध्वा दुर्गोदरेऽथवा ।
मार्गसंस्करणे योज्याः कदन्नन्यूनभोजनाः ॥ १०८ ॥
तत्तज्जात्युक्तकर्माणि कारयीत च तैर्नृपः ॥ १०९ ॥
एवंविधानसाधूंश्च संसर्गेण च दूषितान् ।
दंडयित्वा च सन्मार्गे शिक्षयेत्तान्नृपस्सदा ॥ ११० ॥
राज्ञो राष्ट्रस्य विकृतिं तथा मंत्रिगणस्य च ।
इच्छन्ति शत्रुसंबंधाद्ये तान् हन्याद्धि द्राङ्नृपः ॥ १११ ॥
नेच्छेच्च युगपद्ध्रासं गणदौष्ट्ये गणस्य च ।
एकैकं घातयेद्राजा वत्सोऽश्नाति यथा स्तनं ॥ ११२ ॥
अधर्मशीलो नृपतिर्यदा तं भीषयेज्जनः ।
धर्मशीलातिबलवद्रिपोराश्रयतस्सदा ॥ ११३ ॥
यावत्तु धर्मशीलस्स्यात् स नृपस्तावदेव हि ।
अन्यथा नश्यते लोको द्राङ्नृपोऽपि विनश्यति ॥ ११४ ॥
मातरं पितरं भार्यां यस्संत्यज्य विवर्तते ।
निगडैर्बंधयित्वा तं योजयेन्मार्गसंस्कृतौ ॥ ११५ ॥
तद्भृत्यर्धं तु संदद्यात् तेभ्यो राजा प्रयत्नतः ।
विंद्यात् पणसहस्रं तु दंड उत्तमसाहसः ॥ ११६ ॥
दशमाषमितं ताम्रं तत् पणो राजमुद्रितं ।
वराटिसार्धशतकमूल्यः कार्षापणश्च सः ॥ ११७ ॥

तदर्धश्च तदर्धश्च मध्यमः प्रथमः क्रमात् ।
प्रथमे साहसे दंडः प्रथमश्च क्रमात् परौ ।
मध्यमे मध्यमो धार्यश्चोत्तमे तूत्तमो नृपैः ॥ ११८ ॥
सोपायाः कथिता मिश्रे मित्रोदासीनशत्रवः ॥ ११९ ॥

---

इति शुक्रनीतौ चतुर्थेऽध्याये सुहृदादिलक्षणं नाम प्रथमं प्रकरणं

---

## चतुर्थेऽध्याये द्वितीयं प्रकरणं

अथ कोशप्रकरणं ब्रुवे मिश्रे द्वितीयकं ।
एकार्थसमुदायो यस्स कोशस्स्यात् पृथक् पृथक् ॥ १ ॥
येन केन प्रकारेण धनं संचिनुयान्नृपः ।
तेन संरक्षयेद्राष्ट्रं बलं यज्ञादिकाः क्रियाः ॥ २ ॥
बलप्रजारक्षणार्थं यज्ञार्थं कोशसंग्रहः ।
परत्रेह च सुखदो नृपस्यान्यश्च दुःखदः ॥ ३ ॥
स्त्रीपुत्रार्थं कृतो यश्च स्वोपभोगाय केवलं ।
नरकायैव स ज्ञेयो न परत्र सुखप्रदः ॥ ४ ॥
अन्यायेनार्जितो यस्माद्येन तत्पापभाक् च सः ।
सुपात्रतो गृहीतं यद्दत्तं वा वर्धते च तत् ॥ ५ ॥
स्वागमी सद्व्ययी पात्रमपात्रं विपरीतकं ।
अपात्रस्य हरेत् सर्वं धनं राजा न दोषभाक् ॥ ६ ॥
अधर्मशीलनृपतेस्सर्वतस्संहरेद्धनं ।
छलाद्बलाद्दस्युवृत्त्या परराष्ट्राद्धरेत्तथा ॥ ७ ॥
त्यक्त्वा नीतिबलं स्वीयप्रजापीडनतो धनं ।
संचितं येन तत्तस्य स्वराज्यं शत्रुसाद्भवेत् ॥ ८ ॥
दंडभूभागशुल्कानामाधिक्यात् कोशवर्धनं ।
अनापदि न कुर्वीत तीर्थदेवकरग्रहात् ॥ ९ ॥
यदा शत्रुविनाशार्थं बलसंरक्षणोद्यतः ।
विशिष्टदंडशुल्कादि धनं लोकात्तदा हरेत् ॥ १० ॥
धनिकेभ्यो भृतिं दत्वा स्वापत्तौ तद्धनं हरेत् ।
राजा स्वापत्समुत्तीर्णस्तत् स्वं दद्यात् सवृद्धिकं ॥ ११ ॥

प्रजान्यथा हीयते च राज्यं कोशो नृपस्तथा ।
हीनाः प्रबलदंडेन सुरथाद्या नृपा यतः ॥ १२ ॥
दंडभूभागशुल्कैस्तु विना कोशाद्बलस्य च ।
संरक्षणं भवेत् सम्यग्यावद्विंशतिवत्सरं ।
तथा कोशस्तु संधार्यस्स्वप्रजारक्षणक्षमः ॥ १३" ॥
बलमूलो भवेत् कोशः कोशमूलं बलं स्मृतं ।
बलसंरक्षणात् कोशराष्ट्रवृद्धिररिक्षयः ।
जायते तत्त्रयं स्वर्गः प्रजासंरक्षणेन वै ॥ १५ ॥
यज्ञार्थं द्रव्यमुत्पन्नं यज्ञस्स्वर्गसुखायुपं ।
अर्थभावो बलं कोशो राष्ट्रवृद्ध्यै त्रयं त्विदं ॥ १६ ॥
तद्वृद्धिर्नीतिनैपुण्यात् क्षमाशीलनृपस्य च ।
जायतेऽतो यतेतैव यावद्बुद्धिबलोदयं ॥ १७ ॥
मालाकारस्य वृत्त्यैव स्वप्रजारक्षणेन च ।
शत्रुं हि करदीकृत्य तद्धनैः कोशवर्धनं ॥(१८)॥
करोति स नृपश्रेष्ठो मध्यमो वैश्यवृत्तितः ।
अधमस्सेवया दंडतीर्थदेवकरग्रहैः ॥ १९ ॥
प्रजा हीनधना रक्ष्या भृत्या मध्यधनास्तदा ।
यथाधिकृत्प्रतिभुवोऽधिकद्रव्यास्तथोत्तमाः ॥ २० ॥
धनिकाश्चोत्तमधना न हीना नाधिका नृपैः ॥ २०" ॥
द्वादशाब्दप्रपूरं यद्धनं तन्नीचसंज्ञकं ।
पर्याप्तं षोडशाब्दानां मध्यमं तद्धनं स्मृतं ॥(२१")॥
त्रिंशदब्दप्रपूरं यत् कुटुंबस्योत्तमं धनं ।
क्रमादर्थं रक्षयेद्वा स्वापत्तौ नृप एषु वै ॥ २२" ॥
मूलैर्व्यवहरंत्यर्धैर्न वृद्ध्या वणिजः क्वचित् ।

विक्रीणन्ति महार्घे तु हीनार्घे संचयंति हि ॥(२३॥)॥
व्यवहारे धृतं वैश्यैस्तद्धनेन विना सदा ।
अन्यथा स्वप्रजातापो नृपं दहति सान्वयं ॥ २४॥ ॥
धान्यानां संग्रहः कार्यो वत्सरत्रयपूर्तिदः ।
तत्तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च ।
चिरस्थायी समृद्धानामधिको वापि चेष्यते ॥ २६ ॥
सुपुष्टं कान्तिमज्जातिश्रेष्ठं शुष्कं नवीनकं ।
ससुगंधवर्णरसं धान्यं संवीक्ष्य रक्षयेत् ।
सुसमृद्धं चिरस्थायि महार्घमपि नान्यथा ॥ २७॥ ॥
विषवह्निहिमव्याप्तं कीटजुष्टं न धारयेत् ।
निस्सारतां न हि प्राप्तं व्यये तावन्नियोजयेत् ॥ २८॥ ॥
व्ययीभूतं तु यद्दृष्ट्वा तत्तुल्यं तु नवीनकं ।
गृह्णीयात् सुप्रयत्नेन वत्सरे वत्सरे नृपः ॥ २९॥ ॥
ओषधीनां च धातूनां तृणकाष्ठादिकस्य च ।
यंत्रशस्त्रास्त्राग्निचूर्णभांडादेर्वाससां तथा ॥(३०॥)॥
यद्यच्च साधकं द्रव्यं यद्यत्कार्ये भवेत् सदा ।
संग्रहस्तस्य तस्यापि कर्तव्यः कार्यसिद्धिदः ॥ ३१॥ ॥
संरक्षयेत् प्रयत्नेन संगृहीतं धनादिकं ।
आर्जने तु महद्दुःखं रक्षणे तच्चतुर्गुणं ॥ ३२॥ ॥
क्षणं चोपेक्षितं यत्तद्विनाशं द्राक् समाप्नुयात् ॥ ३३ ॥
आर्जकस्यैव दुःखं स्यात् तथार्जितविनाशने ।
स्त्रीपुत्राणामपि तथा नान्येषां तु कथं भवेत् ॥ ३४ ॥
स्वकार्ये शिथिलो यस्स्यात् किमन्ये न भवंति हि ।
जागरूकस्स्वकार्ये यस्तत्सहायाश्च तत्समाः ॥ ३५ ॥

यो जानात्यर्जितुं सम्यगर्जितं न हि रक्षितुं ।
नातः परतरो मूर्खो वृथा तस्यार्जनश्रमः ॥ ३६ ॥
एकस्मिन्नधिकारे तु यो द्वावधिकरोति सः ।
मूर्खो जीवद्भिर्भार्यैश्च ह्यतिविस्रंभवांस्तथा ॥(३७)॥
महाधनाशो ह्यलसस्त्रीभिर्निर्जित एव हि ।
तथायं साक्षितां पृच्छेच्चोरजारातताथिषु ॥ ३८ ॥
संरक्षयेत् कृपणवत् काले दद्याद्विरक्तवत् ।
मूर्खत्वमन्यथा याति स्वधनव्ययतोऽपि च ॥ ३९ ॥
वस्तुयाथात्म्यविज्ञाने स्वयमेव यतेत् सदा ।
परीक्षकैस्स्वयं राजा रत्नादीन् वीक्ष्य रक्षयेत् ॥ ४० ॥
वज्रं मुक्ता प्रवालं च गोमेदश्चेंद्रनीलकः ।
वैडूर्यः पुष्यरागश्च पाचिर्माणिक्यमेव च ।
महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः ॥ ४१ ॥
रवेः प्रियं रक्तवर्णं माणिक्यं त्विंद्रगोपरुक् ।
रक्तपीतासितश्यामच्छविर्मुक्ता प्रिया विधोः ॥ ४२ ॥
सपीतरक्तरुग्भौमप्रियं विद्रुममुत्तमं ।
मयूरचापपत्राभा पाचिर्बुधहिता हरित् ॥ ४३ ॥
स्वर्णच्छविः पुष्यरागः पीतवर्णो गुरुप्रियः ।
अत्यंतविशदं वज्रं तारकाभं कवेः प्रियं ॥ ४४ ॥
हितश्शनेरिन्द्रनीलो ह्यसितो घनमेघरुक् ।
गोमेदः प्रियकृद्राहोरीपत्पीतारुणप्रभः ॥ ४५ ॥
ओत्वक्ष्याभश्चलत्तंतुर्वैडूर्यः केतुप्रीतिकृत् ।
रत्नश्रेष्ठतरं वज्रं नीचे गोमेदविद्रुमे ॥ ४६ ॥
गारुत्मतं तु माणिक्यं मौक्तिकं श्रेष्ठमेव हि ।

इन्द्रनीलं पुष्यरागो वैडूर्यं मध्यमं स्मृतं ॥ ८७ ॥
रत्नश्रेष्ठो दुर्लभश्च महाद्युतिरहेर्मणिः ।
अजालगर्भं सद्वर्णं रेखाबिंदुविवर्जितं ।
सत्कोणं सुप्रभं रत्नं श्रेष्ठं रत्नविदो जगुः ॥ ८९ ॥
शर्कराभं दलाभं च चिपिटं वर्तुलं हि तत् ।
वर्णाः प्रभास्सिता रक्ताः पीतकृष्णास्तु रत्नजाः ॥ ९० ॥
यथावर्णं यथाछायं रत्नं यद्दोषवर्जितं ।
श्रीपुष्टिकीर्त्तिशौर्यायुःकरमन्यदसत् स्मृतं ।
वर्णमाक्रमते छाया प्रभा वर्णप्रकाशिनी ॥ ९१ ॥
पद्मरागस्तु माणिक्यभेदः कोकनदच्छविः ।
न धारयेत् पुत्रकामा नारी वज्रं कदाचन ॥ ९२ ॥
कालेन हीनं भवति मौक्तिकं विद्रुमं धृतं ।
गुरुत्वात् प्रभया वर्णाद्विस्ताराद्राश्रयादपि ॥ ९३ ॥
आकृत्या चाधिमूल्यं स्याद्रत्नं यद्दोषवर्जितं ।
नायसोल्लिख्यते रत्नं विना मौक्तिकविद्रुमात् ।
पाषाणेनापि च प्राय इति रत्नविदो जगुः ॥ ९४ ॥
मूल्याधिक्याय भवति यद्रत्नं लघुविस्तृतं ।
गुर्वल्पं हीनमौल्याय स्याद्रत्नं त्वपि सद्गुणं ॥ ९६ ॥
शर्कराभं हीनमौल्यं चिपिटं मध्यमं स्मृतं ।
दलाभं श्रेष्ठमूल्यं स्याद्यथाकामात्तु वर्तुलं ॥ ९७ ॥
न जरां यान्ति रत्नानि विद्रुमं मौक्तिकं विना ।
राजदौष्ट्याच्च रत्नानां मूल्यं हीनाधिकं भवेत् ॥ ९८ ॥
मत्स्याहिशंखवाराहवेणुजीमूतशुक्तितः ।
जायते मौक्तिकं तेषु भूरि शुक्त्युद्भवं स्मृतं ॥ ९९ ॥

कृष्णं सितं पीतरक्तं द्विचतुस्सप्तकंचुकं ।
त्रिपंचसप्तावरणमुत्तरोत्तरमुत्तमं ।
कृष्णं सितं क्रमाद्रक्तं पीतं तु जरठं विदुः ॥ ६० ॥
कनिष्ठं मध्यमं श्रेष्ठं क्रमाच्छुक्त्युद्भवं विदुः ।
तदेव हि भवेद्वेध्यमवेध्यानीतराणि च ॥ ६१ ॥
कुर्वंति कृत्रिमं तद्वत् सिंहलद्वीपवासिनः ।
तत्संदेहविनाशार्थं मौक्तिकं सुपरीक्षयेत् ॥ ६२ ॥
उष्णे सलवणस्नेहे जले निश्युषितं हि तत् ।
व्रीहिभिर्मर्दितं नेयाद्वैवर्ण्यं तदकृत्रिमं ॥ ६३ ॥
श्रेष्ठाभं शुक्तिजं विद्यान्मध्याभं त्वितराद्विदुः ।
तुलाकल्पितमूल्यं स्याद्रत्नं गोमेदकं विना ॥ ६४ ॥
क्षुमाविंशतिभी रक्ती रत्नानां मौक्तिकं विना ।
रक्तित्रयं तु मुक्तायाश्चतुःकृष्णलकैर्भवेत् ॥ ६५ ॥
चतुर्विंशतिभिस्ताभी रत्नटंकस्तु रक्तिभिः ।
टंकैश्चतुर्भिस्तोलस्स्यात् स्वर्णविद्रुमयोस्सदा ॥ ६६ ॥
एकस्यैव हि वज्रस्य त्वेकरक्तिमितस्य च ।
सुविस्तृतदलस्यैव मूल्यं पंचसुवर्णकं ॥ ६७ ॥
रक्तिकादलविस्ताराच्छ्रेष्ठं पंचगुणं यदि ।
यथा यथा भवेन्न्यूनं हीनमौल्यं तथा तथा ॥ ६८ ॥
अत्राष्टरक्तिको माषो दशमाषैस्सुवर्णकः ।
स्वर्णस्य तत्पञ्चमूल्यं राजताशीतिकर्षकं ॥ ६९ ॥
यथा गुरुतरं वज्रं तन्मूल्यं रक्तिवर्गतः ।
त्रितीयांशविहीनं तु चिपिटस्य प्रकीर्तितं ॥ ७० ॥
अर्धन्तु शर्कराभस्य चोत्तमं मूल्यमीरितं ।

रक्तिकायाश्च द्वे वज्रे तदर्धं मूल्यमर्हतः ॥ ७१॥
तदर्धं बहवोऽर्हन्ति मध्या हीना यथा गुणैः ।
उत्तमार्धं तदर्धं वा हीरका गुणहानतः ॥ ७२॥
वर्गरक्तिषु संधार्यं कलानां नवकं पृथक् ।
तथांशपंचकं पूर्वं त्रिंशद्भिस्तद्भजेत् ततः ॥(७३॥)॥
लब्धं कलासु संयोज्यं कलानां षोडशांशकैः ।
मुक्तानां कल्पयेन्मूल्यं हीनमध्योत्तमं यथा ॥ ७४॥
सहस्रादधिके मुक्तारक्तिवर्गशते शते ।
कलात्रिंशतकं त्यक्त्वा शेषान्मूल्यं प्रकल्पयेत् ॥ ७५॥
शतादूर्ध्वं रक्तिवर्गाद्ध्रासो विंशतिरक्तिकाः ।
प्रतिशताच्च वज्रस्य सुविस्तृतदलस्य च ॥ ७६॥
तथैव चिपिटस्यापि विस्तृतस्य च ह्रासयेत् ।
शर्कराभस्य पंचाशच्चत्वारिंशच्च वैकतः ॥ ७७॥
रत्नं न धारयेत् कृष्णरक्तबिंदुयुतं सदा ॥ ७८ ॥
गारुत्मतं तूत्तमं चेन्माणिक्यं मूल्यमर्हतः ।
सुवर्णं रक्तिमात्रं चेद्यथारक्तिस्तथा गुरु ॥ ७९ ॥
रक्तिमात्रः पुष्परागो नीलस्स्वर्णार्धमर्हतः ।
चलत्रिसूत्रो वैडूर्यश्चोत्तमं मूल्यमर्हति ॥ ८० ॥
प्रवालं तोलकमितं स्वर्णार्धं मूल्यमर्हति ।
अत्यल्पमूल्यो गोमेदो नोन्मानं तु यतोऽर्हति ॥ ८१ ॥
संख्यातस्स्वल्परत्नानां मूल्यं स्याद्धीरकादिना ।
अत्यंतरमणीयानां दुर्लभानां च कामतः ।
भवेन्मूल्यं न मानेन तथातिगुणशालिनां ॥ ८२॥
त्र्यंघ्रिचतुर्दशहतो वर्गो मौक्तिकरक्तिजः ।

चतुर्विंशतिभिर्भक्तो लब्धान्मूल्यं प्रकल्पयेत् ॥ ८३ ॥
उत्तमं तु सुवर्णार्धमूनमूनं यथागुणं ॥ ८४ ॥
रक्तं पीतं वर्तुलं चेन्मौक्तिकं चोत्तमं सितं ।
अधमं चिपिटं शर्कराभमन्यत्तु मध्यमं ॥ ८५ ॥
रत्ने स्वाभाविका दोषास्संति धातुषु कृत्रिमाः ।
अतो धातून् संपरीक्ष्य तन्मूल्यं कल्पयेद्बुधः ॥ ८६ ॥
सुवर्णं रजतं ताम्रं वङ्गं सीसं च रङ्गकं ।
लोहं च धातवस्सप्त ह्येषामन्ये तु संकराः ॥ ८७ ॥
यथापूर्वं तु श्रेष्ठं स्यात् स्वर्णं श्रेष्ठतरं मतं ।
वङ्गताम्रभवं कांस्यं पित्तलं ताम्ररङ्गजं ॥ ८८ ॥
मानसममपि स्वर्णं तनु स्यात् पृथुलाः परे ।
एकच्छिद्रसमाकृष्टे समखण्डे द्वयोर्यदा ।
धातोस्सूत्रं मानसमं निर्दुष्टस्य भवेत्तदा ॥ ८९ ॥
यन्त्रशस्त्रास्त्ररूपं यन्महामूल्यं भवेदयः ।
रजतं षोडशगुणं भवेत् स्वर्णस्य मूल्यकं ॥ ९० ॥
ताम्रं रजतमूल्यं स्यात् प्रायोऽशीतिगुणं तथा ।
ताम्राधिकं सार्धगुणं वङ्गं वङ्गात्तथा परे ॥ ९१ ॥
रंगसीसे द्वित्रिगुणे ताम्राल्लोहं तु षड्गुणं ।
मूल्यमेतद्विशिष्टं तु ह्युक्तं प्राङ्मूल्यकल्पनं ॥ ९२ ॥
सुशृङ्गवर्णा सुदुघा बहुदुग्धा सुवत्सका ।
तरुण्यल्पा वा महती मूल्याधिक्याय गौर्भवेत् ॥ ९३ ॥
पीतवत्सा प्रस्थदुग्धा तन्मूल्यं राजतं पलं ।
अजायाश्च गवार्धं स्यान्मेष्या मूल्यमजार्धकं ॥ ९४ ॥
दृढस्य युद्धशीलस्य पलं मेषस्य राजतं ।

दश वाष्टौ पलं मूल्यं राजतं तूत्तमं गवां ॥ ९५ ॥
पलं मेष्या अवेश्चापि राजतं मूल्यमुत्तमं ।
गवां समं सार्धगुणं महिष्या मूल्यमुत्तमं ॥ ९६ ॥
सुशृंगवर्णवालिनो वोढुश्शीघ्रगमस्य च ।
अष्टतालवृषस्यैव मूल्यं षष्टिपलं स्मृतं ॥ ९७ ॥
महिषस्योत्तमं मूल्यं सप्त चाष्टौ पलानि च ।
द्वित्रिचतुस्सहस्रं वा मूल्यं श्रेष्ठं गजाश्वयोः ॥ ९८ ॥
उष्ट्रस्य माहिषसमं मूल्यमुत्तममीरितं ॥ ९९ ॥
योजनानां शतं गन्ता चैकेनाह्नाश्व उत्तमः ।
मूल्यं तस्य सुवर्णानां श्रेष्ठं पञ्च शतानि हि ॥ १०० ॥
त्रिंशद्योजनगन्ता वै उष्ट्रश्श्रेष्ठस्तु तस्य वै ।
पलानां तु शतं मूल्यं राजतं परिकीर्तितं ॥ १०१ ॥
बलेनौच्चेन युद्धेन मदेनाप्रतिमो गजः ।
यस्तस्य मूल्यं निष्काणां द्विसहस्रं प्रकीर्तितं ॥ १०२ ॥
चतुर्माषमितं स्वर्णं निष्क इत्यभिधीयते ।
पञ्चरक्तिमितो माषो गजमौल्ये प्रकीर्तितः ॥ १०३ ॥
रत्नभूतं तु तत्तत् स्याद्यद्यदप्रतिमं भुवि ।
यथादेशं यथाकालं मूल्यं सर्वस्य कल्पयेत् ॥ १०४ ॥
न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च ।
नीचमध्योत्तमत्वं तु सर्वस्मिन्मूल्यकल्पने ।
चिंतनीयं बुधैर्लोकाद्वस्तुजातस्य सर्वदा ॥ १०५ ॥
विक्रेतृक्रेतृतो राजभागश्शुल्कमुदाहृतं ।
शुल्कदेशा हट्टमार्गाकरसीमाः प्रकीर्तिताः ॥ १०६ ॥
वस्तुजातस्यैकवारं शुल्कं ग्राह्यं प्रयत्नतः ।

कश्चिन्नैवासकृच्छुल्कं राष्ट्रे ग्राह्यं नृपैश्छलात् ॥ १०७ ॥
द्वात्रिंशांशं हरेद्राजा विक्रेतुः क्रेतुरेव वा ।
विंशांशं वा षोडशांशं शुल्कं मूल्याविरोधकं ॥ १०८ ॥
न हीनसममूल्याद्धि शुल्कं विक्रेतृतो हरेत् ।
लाभं दृष्ट्वा हरेच्छुल्कं क्रेतृतश्च तदा नृपः ॥ १०९ ॥
बहुमध्याल्पफलितां भुवं मानमितां सदा ।
ज्ञात्वा पूर्वं भागमिच्छुः पश्चाद्भागं विकल्पयेत् ॥ ११० ॥
हरेच्च कर्षकाद्भागं यथा नष्टो भवेन्न सः ।
मालाकार इव ग्राह्यो भागो नांगारकारवत् ॥ १११ ॥
बहुमध्याल्पफलतस्तारतम्यं विमृश्य च ।
राजभागादिव्ययतो द्विगुणं लभ्यते यतः ।
कृषिकृत्यं तु तच्छ्रेष्ठं तन्न्यूनं दुःखदं नृणां ॥ ११३ ॥
तडागवापिकाकूपमातृकाद्देवमातृकात् ।
देशान्नदीमातृकात्तु राजानुक्रमतस्सदा ॥(११४)॥
तृतीयांशं चतुर्थांशमर्धांशं तु हरेत् फलं ।
षष्ठांशमूपरात्तद्वत् पाषाणादिसमाकुलात् ॥ ११५ ॥
राजभागस्तु रजतशतकर्षमितो यतः ।
कर्षकाल्लभ्यते तस्मै विंशांशमुत्सृजेन्नृपः ॥ ११६ ॥
स्वर्णादर्धं च रजतात्तृतीयांशं च ताम्रतः ।
चतुर्थांशं तु षष्ठांशं लोहाद्वङ्गाच्च सीसकात् ॥(११७)॥
रत्नार्धं चैव क्षारार्धं खनिजाद्व्ययशेषतः ।
लाभाधिक्यं कर्षकादेर्यथा दृष्ट्वा हरेत् फलं ॥ ११८ ॥
त्रिधा वा पञ्चधा कृत्वा सप्तधा दशधापि वा ।
तृणकाष्ठादिहरकाद्विंशत्यंशं हरेत् फलं ॥ ११९ ॥

अजाविगोमहिष्यश्ववृद्धितोऽष्टांशमाहरेत् ।
महिष्यजाविगोदुग्धात् षोडशांशं हरेन्नृपः ॥ १२० ॥
कारुशिल्पिगणात् पक्षे दैनिकं कर्म कारयेत् ।
तस्य वृद्ध्यै तडागं वा वापिकां कृत्रिमां नदीं ॥ १२१ ॥
कुर्वंत्यन्यत्तद्विधं वा कर्षंत्यभिनवां भुवं ।
तद्व्ययद्विगुणं यावन्न तेभ्यो भागमाहरेत् ॥ १२२ ॥
भुवि भागं भृतिं शुल्कं वृद्धिमुत्कोचकं करं ।
सद्य एव हरेत् सर्वं न तु कालविलंबनैः ॥ १२३ ॥
दद्यात् प्रतिकर्षकाय भागपत्रं स्वचिह्नितं ।
नियम्य ग्रामभूभागमेकस्माद्धनिकाद्धरेत् ॥ १२४ ॥
गृहीत्वा तत्प्रतिभुवं धनं प्राक् तत्समं तु वा ।
विभागशो गृहीत्वापि मासि मासि ऋतौ ऋतौ ॥ १२५ ॥
षोडशद्वादशदशाष्टांशतो वाधिकारिणः ।
स्वांशात् षष्ठांशभागेन ग्रामपान् सन्नियोजयेत् ॥ १२६ ॥
गवादिदुग्धान्न फलं कुटुम्बार्थाद्धरेन्नृपः ।
उपभोगे धान्यवस्त्रं क्रेतृतो नाहरेत् फलं ॥ १२७ ॥
वार्धुषिकाच्च कौसीदाद्द्वात्रिंशांशं हरेन्नृपः ।
गृहाद्याधारभूशुल्कं कृष्टभूमेरिवाहरेत् ॥ १२८ ॥
तथा चापणिकेभ्यस्तु पण्यभूशुल्कमाहरेत् ।
मार्गसंस्काररक्षार्थं मार्गगेभ्यो हरेत् फलं ॥ १२९ ॥
सर्वतः फलभुग्भूत्वा दासवत् स्याच्च रक्षणे ।
इति कोशप्रकरणं समासात् कथितं किल ॥ १३० ॥

---

इति शुक्रनीतौ चतुर्थेऽध्याये कोशनिरूपणं नाम
द्वितीयं प्रकरणं

## चतुर्थेऽध्याये तृतीयं प्रकरणं

अथ मिश्रे तृतीयं तु राष्ट्रं वक्ष्ये समासतः ।
स्थावरं जङ्गमं चापि राष्ट्रशब्देन गीयते
यस्याधीनं भवेद्यावत्तद्राष्ट्रं तस्य वै भवेत् ।
कुबेरता शतगुणाधिका सर्वगुणात्ततः
ईशता चाधिकतरा सा नाल्पतपसः फलं ।
स दीव्यति पृथिव्यां तु नान्यो देवो यतस्स्मृतः
तस्याश्रितो भवेल्लोकस्तद्वदाचरति प्रजा ।
भुंक्ते राष्ट्रफलं सम्यगतो राष्ट्रकृतं त्वघं
स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्तते ।
धर्मनीतिपरो राजा चिरं कीर्तिं स चाश्नुते
भूमौ यावद्यस्य कीर्तिस्तावत् स्वर्गे स तिष्ठति ।
अकीर्तिरेव नरको नान्योऽस्ति नरको दिवि
नरदेहाद्विना त्वन्यो देहो नरक एव सः ।
महत् पापफलं विद्यादाधिव्याधिस्वरूपकं
स्वयं धर्मपरो भूत्वा धर्मे संस्थापयेत् प्रजाः ।
प्रमाणभूतं धर्मिष्ठमुपसर्पन्त्यतः प्रजाः
देशधर्मा जातिधर्माः कुलधर्मास्सनातनाः ।
मुनिप्रोक्ताश्च ये धर्माः प्राचीना नूतनाश्च ये
ते राष्ट्रगुप्त्यै संधार्या ज्ञात्वा यत्नेन सन्नृपैः ।
धर्मसंस्थापनाद्राजा श्रियं कीर्तिं प्रविन्दति
चतुर्धा भेदिता जातिर्ब्रह्मणा कर्मभिः पुरा ।

जात्यानंत्यं तु संप्राप्तं तद्वक्तुं नैव शक्यते ॥ ११ ॥
मन्यन्ते जातिभेदं ये मनुष्याणां तु जन्मना ।
त एव हि विजानंति पार्थक्यं नामकर्मभिः ॥ १२ ॥
जरायुजांडजा स्वेदोद्भिज्जा जातिस्सुसंग्रहात् ।
उत्तमो नीचसंसर्गाद्भवेन्नीचस्तु जन्मना ॥(१३)॥
नीचो भवेन्नोत्तमस्तु संसर्गाद्वापि जन्मना ।
कर्मणोत्तमनीचत्वं कालतस्तु भवेद्गुणैः ।
विद्याकलाश्रयेणैव तन्नाम्ना जातिरुच्यते ॥ १५ ॥
इज्याध्ययनदानानि कर्माणि तु द्विजन्मनां ।
प्रतिग्रहोऽध्यापनं च याजनं ब्राह्मणेऽधिकं ॥ १६ ॥
सद्रक्षणं दुष्टनाशस्स्वांशादानं तु क्षत्रिये ।
कृषिगोगुप्तिवाणिज्यमधिकं तु विशां स्मृतं ।
दानं सेवैव शूद्रादेर्नीचकर्म प्रकीर्तितं ॥ १७ ॥
क्रियाभेदैस्तु सर्वेषां भृतिवृत्तिरनिंदिता ॥ १८ ॥
सीरभेदैः कृषिः प्रोक्ता मन्वाद्यैर्ब्राह्मणादिषु ।
ब्राह्मणैष्षोडशगवं चतुरूनं यथा परैः ।
द्विगवं वांत्यजैस्सीरं दृष्ट्वा भूमार्दवं तथा ॥ १९ ॥
ब्राह्मणेन विनान्येषां भिक्षावृत्तिर्विगर्हिता ॥ २० ॥
तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगंतव्यस्सरहस्यो द्विजन्मना ॥ २१ ॥
योऽधीतविद्यस्सकलस्स सर्वेषां गुरुर्भवेत् ।
न च जात्यानधीतो यो गुरुर्भवितुमर्हति ॥ २२ ॥
विद्या ह्यनन्ताश्च कलास्संख्यातुं नैव शक्यते ।
विद्या मुख्याश्च द्वात्रिंशच्चतुष्षष्टिः कलास्स्मृताः ॥ २३ ॥

यद्यत् स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकं ।
शक्तो मूकोऽपि यत् कर्तुं कलासंज्ञं तु तत् स्मृतं ॥ २४ ॥
उक्तं संक्षेपतो लक्ष्म विशिष्टं पृथगुच्यते ।
विद्यानां च कलानां च नामानि तु पृथक् पृथक् ॥ २५ ॥
ऋग्यजुस्साम चाथर्वा वेदा आयुर्धनुः क्रमात् ।
गांधर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्तिताः ॥(२६)॥
शिक्षा व्याकरणं कल्पो निरुक्तं ज्योतिषं तथा ।
छंदष्षडङ्गानीमानि वेदानां कीर्तितानि हि ॥(२७)॥
मीमांसातर्कसांख्यानि वेदान्तो योग एव च ।
इतिहासाः पुराणानि स्मृतयो नास्तिकं मतं ॥(२८)॥
अर्थशास्त्रं कामशास्त्रं तथा शिल्पमलंकृतिः ।
काव्यानि देशभाषावसरोक्तिर्यावनं मतं ।
देशादिधर्मा द्वात्रिंशदेता विद्याभिसंज्ञिताः ॥ २९ ॥
मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु ॥ ३० ॥
जपहोमार्चनं यस्य देवताप्रीतिदं भवेत् ।
उच्चारान्मन्त्रसंज्ञं तद्विनियोगि च ब्राह्मणं ॥ ३१ ॥
ऋग्रूपा यत्र ये मन्त्राः पादशोऽर्धर्चशोऽपि वा ।
येषां हौत्रं स ऋग्भागस्समाख्यानं च यत्र वा ॥ ३२ ॥
प्रश्लिष्टपठिता मन्त्रा वृत्तगीतिविवर्जिताः ।
आध्वर्यवं यत्र कर्म त्रिगुणं यत्र पाठनं ॥(३३)॥
मन्त्रब्राह्मणयोरेव यजुर्वेदस्स उच्यते ।
उद्गीथं यस्य शस्त्रादेर्यज्ञे तत् सामसंज्ञकं ॥ ३४ ॥
अथर्वांगिरसो नाम ह्युपास्योपासनात्मकः ।
इति वेदचतुष्कं तु ह्युद्दिष्टं च समासतः ॥ ३५ ॥

विंदत्यायुर्वेत्ति सम्यगाकृत्यौषधिहेतुतः ।
यस्मिन्नृग्वेदोपवेदस्स चायुर्वेदसंज्ञकः ॥ ३६ ॥
युद्धशस्त्रास्त्रव्यूहादिरचनाकुशलो भवेत् ।
यजुर्वेदोपवेदोऽयं धनुर्वेदस्तु येन सः ॥ ३७ ॥
स्वरैरुदात्तादिधर्मैस्तंत्रीकंठोत्थितैस्सदा ।
सतालैर्गानविज्ञानं गांधर्वो वेद एव सः ॥ ३८ ॥
विविधोपास्यमन्त्राणां प्रयोगास्सुविभेदतः ।
कथितास्सोपसंहारास्तद्धर्मनियमैश्च षट् ।
अथर्वणां चोपवेदस्तंत्ररूपस्स एव हि ॥ ३९ ॥
स्वरतः कालतस्स्थानात् प्रयत्नानुप्रदानतः ।
सवनाद्यैश्च सा शिक्षा वर्णानां पाठशिक्षणात् ॥ ४० ॥
प्रयोगो यत्र यज्ञानामुक्तो ब्राह्मणशेषतः ।
श्रौतकल्पस्स विज्ञेयस्स्मार्तकल्पस्तथेतरः ॥ ४१ ॥
व्याकृताः प्रत्ययाद्यैश्च धातुसंधिसमासतः ।
शब्दा यत्र व्याकरणमेतद्धि बहुलिंगतः ॥ ४२ ॥
शब्दनिर्वचनं यत्र वाक्यार्थैकार्थसंग्रहः ।
निरुक्तं तत् समाख्यानाद्वेदाङ्गं श्रोत्रसंज्ञकं ॥ ४३ ॥
नक्षत्रग्रहगमनैः कालो येन विधीयते ।
संहिताभिश्च होराभिर्गणितैर्ज्योतिषं हि तत् ॥ ४४ ॥
म्यरस्तजभ्नगैर्लान्तैः पद्यं यत्र प्रमाणतः ।
कल्प्यते छन्दश्शास्त्रं तद्वेदानां पादरूपधृक् ॥ ४५ ॥
यत्र व्यवस्थिता चार्थकल्पना विधिभेदतः ।
मीमांसा वेदवाक्यानां सैव न्यायश्च कीर्तितः ॥ ४६ ॥
भावाभावपदार्थानां प्रत्यक्षादिप्रमाणतः ।

सविवेको यत्र तर्कः कणादादिमतं च यत् ॥ ८७ ॥
पुरुषोऽष्टौ प्रकृतयो विकाराष्षोड्शेति च ।
तत्त्वादिसंख्यावैशिष्ट्यात् सांख्यमित्यभिधीयते ॥ ८८ ॥
ब्रह्मैकमाद्वितीयं स्यान्नाना नेहास्ति किंचन ।
मायिकं सर्वमज्ञानाद्भाति वेदान्तिनां मतं ॥ ८९ ॥
चित्तवृत्तिनिरोधस्तु प्राणसंयमनादिभिः ।
तद्योगशास्त्रं विज्ञेयं यस्मिन् ध्यानसमाधितः ॥ ९० ॥
प्राग्वृत्तकथनं चैकराजकृत्यमिषादितः ।
यस्मिन् स इतिहासस्स्यात् पुरावृत्तस्स एव हि ॥ ९१ ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं यस्मिन् पुराणं तद्विकीर्तितं ॥ ९२ ॥
वर्णादिधर्मस्मरणं यत्र वेदाविरोधकं ।
कीर्तनं चार्थशास्त्राणां स्मृतिस्सा च प्रकीर्तिता ॥ ९३ ॥
युक्तिर्बलीयसी यत्र सर्वं स्वाभाविकं मतं ।
कस्यापि नेश्वरः कर्ता न वेदो नास्तिकं हि तत् ॥ ९४ ॥
श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनं ।
सुयुक्त्यार्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते ॥ ९५ ॥
शशादिभेदतः पुंसामनुकूलादिभेदतः ।
पद्मिन्यादिप्रभेदेन स्त्रीणां स्वीयादिभेदतः ।
तत् कामशास्त्रं सत्त्वादेर्लक्ष्म यत्रास्ति चोभयोः ॥ ९७ ॥
प्रासादप्रतिमारामगृहवाप्यादिसत्कृतिः ।
कथिता यत्र तच्छिल्पशास्त्रमुक्तं महर्षिभिः ॥ ९८ ॥
समन्यूनाधिकत्वेन सारूप्यादिप्रभेदतः ।
अन्योऽन्यगुणभूषा तु वर्ण्यतेऽलंकृतिश्च सा ॥ ९९ ॥

सरसालंकृतादुष्टशब्दार्थं काव्यमेव तत् ।
विलक्षणचमत्कारबीजं पद्यादिभेदतः ॥ ६० ॥
लोकसंकेततोऽर्थानां सुग्रहा वाक् तु दैशिकी ।
विना कौशिकशास्त्रीयसंकेतैः कार्यसाधिका ॥ ६१ ॥
यथा कालोचिता वाग्वावसरोक्तिश्च सा स्मृता ॥ ६१ ॥
ईश्वरः कारणं यत्रादृश्योऽस्ति जगतस्सदा ।
श्रुतिस्मृती विना धर्माधर्मौस्तस्तच्च यावनं ॥ ६२ ॥
श्रुत्यादिभिन्नधर्मोऽस्ति यत्र तद्यावनं मतं ॥ ६३ ॥
कल्पितश्रुतिमूलो वामूलो लोकैर्धृतस्सदा ।
देशादिधर्मस्स ज्ञेयो देशे देशे कुले कुले ॥ ६४ ॥
पृथक् पृथक् तु विद्यानां लक्षणं संप्रकाशितं ।
कलानां न पृथङ्नाम लक्ष्म चास्तीह केवलं ॥ ६५ ॥
पृथक् पृथक् क्रियाभिर्हि कलाभेदस्तु जायते ।
यां यां कलां समाश्रित्य तन्नाम्ना जातिरुच्यते ॥ ६६ ॥
हावभावादिसंयुक्तं नर्तनं तु कला स्मृता ।
अनेकवाद्यविकृतौ ज्ञानं तद्वादने कला ॥ ६७ ॥
वस्त्रालंकारसंधानं स्त्रीपुंसोश्च कला स्मृता ।
अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥ ६८ ॥
शय्यास्तरणसंयोगपुष्पादिग्रथनं कला ।
द्यूताद्यनेकक्रीडाभी रञ्जनं तु कला स्मृता ॥ ६९ ॥
अनेकासनसंधानै रतेर्ज्ञानं कला स्मृता ।
कलासप्तकमेतद्धि गांधर्वे समुदाहृतं ॥ ७० ॥
मकरन्दासवादीनां मद्यादीनां कृतिः कला ।
शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधे कला ॥ ७१ ॥

हीनादिरससंयोगान्नादिसंपाचनं कला ।
वृक्षादिप्रसवारोपपालनादिकृतिः कला ॥ ७२ ॥
पाषाणधात्वादिदृतिस्तद्भस्मकरणं कला ।
यावदिक्षुविकाराणां कृतिज्ञानं कला स्मृता ॥ ७३ ॥
धात्वौषधीनां संयोगक्रियाज्ञानं कला स्मृता ।
धातुसांकर्यपार्थक्यकरणं तु कला स्मृता ॥ ७४ ॥
संयोगापूर्वविज्ञानं धात्वादीनां कला स्मृता ।
क्षारनिष्कासनज्ञानं कलासंज्ञं तु तत् स्मृतं ॥ ७५ ॥
कलादशकमेतद्धि ह्यायुर्वेदागमेषु च ॥ ७५ ॥
शस्त्रसंधानविक्षेपः पदादिन्यासतः कला ।
संध्याघाताकृष्टिभेदैर्मल्लयुद्धं कला स्मृता ॥ ७६ ॥
[बाहुयुद्धं तु मल्लानामशस्त्रं मुष्टिभिस्स्मृतं ।
मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते ॥ ७७ ॥
बलदर्पविनाशान्तं नियुद्धं यशसे रिपोः ।
न कस्यासीत कुर्याद्वा प्राणान्तं बाहुयुद्धकं ॥ ७८ ॥
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसंकटैः ।
सन्निपातावघातैश्च प्रमादोन्मथनैस्तथा ।
कृतं निपीडनं ज्ञेयं तन्मुक्तिस्तु प्रतिक्रिया ॥ ८० ॥
कलाभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनं ।]
वाद्यसंकेततो व्यूहरचनादि कला स्मृता ॥ ८१ ॥
गजाश्वरथगत्या तु युद्धसंयोजनं कला ।
कलापञ्चकमेतद्धि धनुर्वेदागमे स्थितं ॥ ८२ ॥
विविधासनमुद्राभिर्देवतातोषणं कला ।
सारथ्यं च गजाश्वादेर्गतिशिक्षा कला स्मृता ॥ ८३ ॥

मृत्तिकाकाष्ठपाषाणधातुभांडादिसत्क्रिया ।
पृथक् कलाचतुष्कं तु चित्राद्यालेखनं कला ॥ ८४ ॥
तडागवापीप्रासादसमभूमिक्रिया कला ।
घट्याद्यनेकयन्त्राणां वाद्यानां तु कृतिः कला ॥ ८५ ॥
हीनमध्यादिसंयोगवर्णाद्यै रंजनं कला ।
जलवाय्वग्निसंयोगनिरोधैश्च क्रिया कला ॥ ८६ ॥
नौकारथादियानानां कृतिज्ञानं कला स्मृता ।
सूत्रादिरज्जुकरणविज्ञानं तु कला स्मृता ॥ ८७ ॥
अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता ।
वेधादिसदसज्ज्ञानं रत्नानां च कला स्मृता ॥ ८८ ॥
स्वर्णादीनां तु याथात्म्यविज्ञानं च कला स्मृता ।
कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता ॥ ८९ ॥
स्वर्णाद्यलंकारकृतिः कला लेपादिसत्कृतिः ।
मार्दवादिक्रियाज्ञानं चर्मणां तु कला स्मृता ॥ ९० ॥
पशुचर्मांगनिर्हारक्रियाज्ञानं कला स्मृता ।
दुग्धदोहादिविज्ञानं घृतांतं तु कला स्मृता ॥ ९१ ॥
सीवने कंचुकादीनां विज्ञानं तु कलात्मकं ।
बाह्वादिभिश्च तरणं कलासंज्ञं जले स्मृतं ॥ ९२ ॥
मार्जने गृहभांडादेर्विज्ञानं तु कला स्मृता ।
वस्त्रसंमार्जनं चैव क्षुरकर्म कले ह्युभे ॥ ९३ ॥
तिलमांसादिस्नेहानां कला निष्कासने कृतिः ।
सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥ ९४ ॥
मनोऽनुकूलसेवायाः कृतिज्ञानं कला स्मृता ।
वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥ ९५ ॥

काचपात्रादिकरणविज्ञानं तु कला स्मृता ।
संसेचनं संहरणं जलानां तु कला स्मृता ॥ ९६ ॥
लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला स्मृता ।
गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥ ९७ ॥
शिशोस्संरक्षणे ज्ञानं धारणे क्रीडने कला ।
सुयुक्तताडनज्ञानमपराधिजने कला ॥ ९८ ॥
नानादेशीयवर्णानां सुसम्यग्लेखने कला ।
तांबूलरक्षादिकृतिविज्ञानं तु कला स्मृता ॥ ९९ ॥
आदानमाशुकारित्वं प्रतिदानं चिरक्रिया ।
कलासु द्वौ गुणौ ज्ञेयौ द्वे कले परिकीर्तिते ॥ १०० ॥
चतुष्षष्टिकला ह्येतास्संक्षेपेण निदर्शिताः ।
यां यां कलां समाश्रित्य तां तां कुर्यात् स एव हि ॥ १०१ ॥

---

इति शुक्रनीतौ राष्ट्रे आद्यं चतुर्थेऽध्याये विद्याकलानिरूपणं
नाम तृतीयं प्रकरणं

---

## चतुर्थेऽध्याये चतुर्थं प्रकरणं

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिः क्रमात् ।
चत्वार आश्रमाश्चैते ब्राह्मणस्य सदैव हि ॥ १ ॥
अन्येषामन्त्यहीनाश्च क्षत्रविट्शूद्रकर्मणां ।
विद्यार्थं ब्रह्मचारी स्यात् सर्वेषां पालने गृही ॥(२)॥
वानप्रस्थस्संदमने सन्न्यासी मोक्षसाधने ।
वर्तयंत्यन्यथा दंड्या या वर्णाश्रमजातयः ॥ ३ ॥
कुलान्यकुलतां यांति ह्यकुलानि कुलीनतां ।
यदि राज्ञोपेक्षितानि दण्डतोऽशिक्षितानि च ॥ ४ ॥
जपं तपस्तीर्थसेवां प्रव्रज्यां मन्त्रसाधनं ।
देवपूजां नैव कुर्यात् स्त्रीशूद्रस्तु पतिं विना ॥ ५ ॥
न विद्यते पृथक् स्त्रीणां त्रिवर्गविधिसाधनं ।
पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च ॥(६)॥
उत्थाप्य शयनीयानि कृत्वा वेश्मविशोधनं ।
मार्जनैर्लेपनैः प्राप्य सानलं यवसांगणं ॥(७)॥
शोधयेद्यज्ञपात्राणि स्निग्धान्युष्णेन वारिणा ।
प्रोक्षणीयेरितान्येव यथास्थानं प्रकल्पयेत् ॥ ८ ॥
शोषयित्वा तु पात्राणि पूरयित्वा तु धारयेत् ॥ ८"॥
महानसस्थपात्राणि बहिः प्रक्षाल्य सर्वशः ।
मृद्भिस्तु शोधयेच्चुल्लीं तत्राग्निं सेन्धनं न्यसेत् ॥ ९"॥
स्मृत्वा नियोगपात्राणि रसान्नद्रविणानि च ।
कृतपूर्वाह्णकार्येयं श्वशुरावभिवादयेत् ॥ १०"॥

ताभ्यां भर्त्रा पितृभ्यां वा भ्रातृमातुलबांधवैः ।
वस्त्रालंकाररत्नानि प्रदत्तान्येव धारयेत् ॥ १२ ॥
मनोवाक्कर्मभिश्शुद्धा पतिदेशानुवर्तिनी ।
छायेवानुगता स्वच्छा सखीव हितकर्मसु ।
दासीव दिष्टकार्येषु भार्या भर्तुस्सदा भवेत् ॥ १३ ॥
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य सा ।
वैश्वदेवोद्धृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥(१४)॥
पतिं च तदनुज्ञाता शिष्टमन्नाद्यमात्मना ।
भुक्त्वा नयेदहश्शेषं सदायव्ययचिन्तया ॥ १५ ॥
पुनस्सायं पुनः प्रातर्गृहशुद्धिं विधाय च ।
कृतान्नसाधना साध्वी सभृत्यं भोजयेत् पतिं ॥ १६ ॥
नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च ।
आस्तृत्य साधु शयनं ततः परिचरेत् पतिं ॥ १७ ॥
सुप्ते पत्यौ तदभ्यास्य स्वयं तद्गतमानसा ।
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥(१८)॥
नोच्चैर्वदेन्न परुषं न बह्वाहूतिमप्रियं ।
न केनचिच्च विवदेदप्रलापविवादिनी ॥ १९ ॥
न चास्य व्ययशीला स्यान्न धर्मार्थविरोधिनी ।
प्रमादोन्मादरोषेर्ष्यावचनान्यातिनिन्दितां ॥(२०)॥
पैशुन्यहिंसाविषयमोहाहंकारदर्पतां ।
नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत् ॥ २१ ॥
एवं परिचरंती सा पतिं परमदैवतं ।
यशस्यमिह यात्येव परत्रैषा सलोकतां ॥ २२ ॥
योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते ।

रजसो दर्शनादेषा सर्वमेव परित्यजेत् ॥ २३ ॥
सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ।
एकाम्बरा कृशा दीना स्नानालंकारवर्जिता ॥ २४ ॥
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयं ।
स्नायीत सा त्रिरात्र्यन्ते सचेलाभ्युदिते रवौ ॥ २५ ॥
विलोक्य भर्तृवदनं शुद्धा भवति धर्मतः ।
कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥ २६ ॥
द्विजस्त्रीणामयं धर्मः प्रायोऽन्यासामपीष्यते ।
कृषिपण्यादिपुंकृत्ये भवेयुस्ताः प्रसाधिकाः ॥ २७ ॥
संगीतैर्मधुरालापैस्स्वायत्तस्तु पतिर्यथा ।
भवेत्तथाऽचरेयुर्वै मायाभिः कामकेलिभिः ॥ २८ ॥
[मृते भर्तरि संगच्छेद्भर्तुर्वा पालयेद्व्रतं ।
परवेश्मरुचिर्न स्याद्ब्रह्मचर्ये स्थिता सती ॥ २९ ॥
मंडनं वर्जयेन्नित्यं तथा प्रोषितभर्तृका ।
देवताराधनपरा तिष्ठेद्भर्तृहिते रता ॥ ३० ॥
धारयेन्मंगलार्थानि किंचिदाभरणानि च] ॥ ३०′॥
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखं ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ ३१′॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य प्रदातारं भर्तारं का न पूजयेत् ॥ ३२″॥
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विना ।
पुराणाद्युक्तमंत्रैश्च नमोऽन्तैः कर्म केवलं ॥ ३४ ॥
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत् ।

प्रजाताः कर्म कुर्युर्वै वैश्यविन्नासु वैश्यवत् ॥ ३५ ॥
वैश्यासु क्षत्रविप्राभ्यां जातश्शूद्रासु शूद्रवत् ।
अधमादुत्तमायां तु जातश्शूद्राधमस्स्मृतः ।
स शूद्रादनुसत्कुर्यान्नाममंत्रेण सर्वदा ॥ ३६ ॥
ससंकरचतुर्वर्णा एकत्रैकत्र यावनाः ।
वेदभिन्नप्रमाणास्ते प्रत्यगुत्तरवासिनः ॥ ३७ ॥
तदाचार्यैश्च तच्छास्त्रं निर्मितं तद्धितार्थकं ।
व्यवहाराय या नीतिरुभयोरविवादिनी ॥ ३८ ॥
कदाचिद्धीनमाहात्म्यात् क्षेत्रमाहात्म्यतः क्वचित् ।
नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रबीजतः ॥ ३९ ॥
विश्वामित्रश्च वसिष्ठो मातंगो नारदादयः ।
तपोविशेषैस्संप्राप्ता उत्तमत्वं न जातितः ॥ ४० ॥
स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितस्सदा ।
तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः ॥ ४१ ॥
जातिवर्णाश्रमान् सर्वान् पृथक् चिह्नैस्सुलक्षयेत् ।
यंत्राणि धातुकाराणां संरक्षेद्वीक्ष्य सर्वदा ॥ ४२ ॥
कारुशिल्पिगणान् राष्ट्रे रक्षेत् कार्यानुमानतः ।
अधिकान् कृपिकृत्ये वा भृत्यवर्गे नियोजयेत् ॥ ४३ ॥
चौराणां पितृभूतास्ते स्वर्णकारादयस्त्वतः ।
गंजागृहं पृथग्ग्रामात्तस्मिन् रक्षेत्तु मद्यपान् ॥ ४४ ॥
न दिवा मद्यपानं हि राष्ट्रे कुर्याद्धि कर्हिचित् ॥ ४५ ॥
ग्रामे ग्राम्यान् वने वन्यान् वृक्षान् संरोपयेन्नृपः ।
उत्तमान् विंशतिकरैर्मध्यमांस्तिथिहस्ततः ॥ ४६ ॥
सामान्यान् दशहस्तैश्च कनिष्ठान् पंचभिः करैः ।

अजाविगोशकृद्भिर्वा जलैर्मांसैश्च पोषयेत् ॥ ४७ ॥
उदुंबराश्वत्थवटचिंचाचंदनजंभलाः ।
कदंबाशोकवकुलबिल्वामृतकपित्थकाः ॥(४८)॥
राजादनाम्रपुन्नागतूदकाष्ठाम्रचंपकाः ।
नीपकोकाम्रसरलदाडिमाक्षोटभिस्सटाः ॥(४९)॥
शिंशुपाशिंभुबदरनिंबजंबीरक्षीरिकाः ।
खर्जूरदेवकरजफल्गुतापिंछसिंभलाः ॥(५०)॥
कुद्दालो लवली धात्री क्रमुको मातुलुंगकः ।
लकुचो नारिकेलश्च रंभान्ये सत्फला द्रुमाः ।
सुपुष्पाश्चैव ये वृक्षा ग्रामाभ्यर्णे नियोजयेत् ॥५१॥
[वामभागेऽथवोद्यानं कुर्याद्वासगृहे शुभं ।
सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे ।
वसंते पञ्चमेऽह्नस्तु सेच्या वर्षासु न क्वचित् ॥ ५२ ॥
फलनाशे कुलुत्थैश्च मापैर्मुद्गैर्यवैस्तिलैः ।
शृतशीतपयस्सेकः फलपुष्पाय सर्वदा ।
मत्स्यांभसा तु सेकेन वृद्धिर्भवति शाखिनां ॥ ५४ ॥
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ।
गोमांसमुदकं चेति सप्तरात्रं निधापयेत् ॥ ५५ ॥
उत्सेकस्सर्ववृक्षाणां फलपुष्पादिवृद्धिदः] ॥ ५६ ॥
ये च कंटकिनो वृक्षाः खदिराद्यास्तथापरे ।
आरण्यकास्ते विज्ञेयास्तेषां तत्र नियोजनं ॥ ५७ ॥
खदिराश्मंतशाकाग्निमंथस्योनाकवञ्जुलाः ।
तमालशालकुटजधवार्जुनपलाशकाः ॥(५८)॥
सप्तपर्णशमीतुन्नदेवदारुविकंकताः ।

करमर्देंगुदीभूर्जविषमुष्टिकरीरकाः ॥(५९)॥
शल्लकी काश्मरी पाठा तिंदुको बीजसारकः।
हरीतकी च भल्लातश्शंपाकोऽर्कश्च पुष्करः ॥(६०)॥
अरिमेदश्च पीतद्रुश्शाल्मलिश्च विभीतकः।
नखेलो महावृक्षोऽपरे ये मधुकादयः ॥(६१)॥
प्रतानवत्यस्स्तंबिन्यो गुल्मिन्यश्च तथैव च।
ग्राम्या ग्रामे वने वन्या नियोज्यास्ते प्रयत्नतः ॥ ६२ ॥
कूपवापीपुष्कारिण्यस्तडागास्सुगमास्तथा ।
कार्याः खाताद्विद्वित्रिगुणविस्तारपदधानिकाः ॥(६३)॥
यथा तथा ह्यनेकाश्च राष्ट्रे स्याद्विपुलं जलं।
नदीनां सेतवः कार्या विविधास्सुमनोहराः।
नौकादिजलयानानि पारगानि नदीषु च ॥ ६४ ॥
यज्जातिपूज्यो यो देवस्तद्विद्यायाश्च यो गुरुः।
तदालयानि तज्जातिगृहपंक्तिमुखे न्यसेत् ॥ ६५ ॥
शृंगाटके ग्राममध्ये विष्णोर्वा शंकरस्य च ।
गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत् ॥(६६)॥
मेर्वादिषोडशविधलक्षणान् सुमनोहरान् ।
वर्तुलांश्चतुरश्रान् वा यंत्राकारान् समंडपान् ॥(६७)॥
प्राकारगोपुरगणयुतान् द्वित्रिगुणोच्छ्रितान्।
यथोक्तांतस्सुप्रतिमाञ्जलमूलान् विचित्रितान् ॥ ६८ ॥
रम्यस्सहस्राशिखरस्सपादशतभूमिकः ।
सहस्रहस्तविस्तारोच्छ्रायस्स्यान्मेरुसंज्ञकः ॥ ६९ ॥
ततस्ततोऽष्टांशहीना अपरे मंदरादयः ।
मंदरो ऋक्षमाली च द्युमणिश्चन्द्रशेखरः ॥(७०)॥

माल्यवान् पारियात्रश्च रत्नशीर्षश्च धातुमान् ।
पद्मकोशः पुष्पहासश्श्रीकरस्स्वस्तिकाभिधः ।
महापद्मः पद्मकूटष्षोडशो विजयाभिधः ॥ ७२ ॥
तन्मण्डपश्च तत्तुल्यः पादन्यूनोच्छ्रितः पुरः ।
स्वाराध्यदेवताध्यानैः प्रतिमास्तेषु योजयेत् ॥ ७३ ॥
[ध्यानयोगस्य संसिद्ध्यै प्रतिमालक्षणं स्मृतं ।
प्रतिमाकारको मर्त्यो यथा ध्यानरतो भवेत् ।
तथा नान्येन मार्गेण प्रत्यक्षेणापि वा खलु ॥ ७४॥
प्रतिमा सैकती पैष्टी लेख्या लेप्या च मृन्मयी ।
वार्क्षी पाषाणधातूत्था स्थिरा ज्ञेया यथोत्तरा ॥(७५)॥
यथोक्तावयवैः पूर्णा पुण्यदा सुमनोहरा ।
अन्यथायुर्धनहरा नित्यं दुःखविवर्धिनी ॥ ७६॥
देवानां प्रतिविंबानि कुर्याच्छ्रेयस्कराणि च ।
स्वर्ग्याणि मानवादीनामस्वर्ग्याण्यशुभानि च ।
मानतो नाधिकं हीनं तद्विंवं रम्यमुच्यते ॥ ७८ ॥
अपिश्रेयस्करं नृणां देवविंवमलक्षणं ।
सलक्षणं मर्त्यविंवं न हि श्रेयस्करं सदा] ॥ ७९ ॥
सात्त्विकी राजसी देवप्रतिमा तामसी त्रिधा ।
विष्ण्वादीनां च या यत्र योग्या पूज्या तु तादृशी ॥ ८० ॥
योगमुद्रान्विता स्वस्था वराभयकरान्विता ।
देवेन्द्रादिस्तुतनुता सात्त्विकी सा प्रकीर्तिता ॥ ८१ ॥
तिष्ठन्ती वाहनस्था वा नानाभरणभूषिता ।
या शस्त्रास्त्राभयवरकरा सा राजसी स्मृता ॥ ८२ ॥
शस्त्रास्त्रैर्दैत्यहंत्री या ह्युग्ररूपधरा सदा ।

युद्धाभिनंदिनी सा तु तामसी प्रतिमोच्यते ॥ ८३ ॥
संक्षेपतस्तु ध्यानादि विष्ण्वादीनां तथोच्यते ।
प्रमाणं प्रतिमानां च तदंगानां सुविस्तरं ॥ ८४ ॥
स्वस्वमुष्टेश्चतुर्थोंऽशो ह्यंगुलं परिकीर्तितं ।
तदंगुलैर्द्वादशभिर्भवेत् तालस्य दीर्घता ॥ ८५ ॥
वामनी सप्ततालां स्यादष्टताला तु मानुषी ।
नवताला स्मृता दैवी राक्षसी दशतालिका ॥ ८६ ॥
सप्ततालाद्युच्चता वा मूर्तीनां देशभेदतः ।
सदैव स्त्री सप्तताला सप्ततालश्च वामनः ॥ ८७ ॥
नरो नारायणो रामो नृसिंहो दशतालकः ।
[दशतालस्मृतो बाणो बलींद्रो भार्गवोऽर्जुनः ॥ ८८ ॥
चंडी भैरववेतालनरसिंहवराहकाः ।
क्रूरा द्वादशतालास्स्युर्हयशीर्षादयस्तथा ॥ ८९ ॥
ज्ञेया षोडशताला तु पैशाची वासुरी सदा ।
हिरण्यकशिपुर्वृत्रो हिरण्याक्षश्च रावणः ॥(९०)॥
कुंभकर्णोऽथ नमुचिर्निशुंभश्शुंभ एव हि ।
एते षोडशतालास्स्युर्माहिषो रक्तबीजकः ॥ ९१ ॥
पंचतालास्स्मृता बालाष्षट्तालाश्च कुमारकाः ।]
दशताला कृतयुगे त्रेतायां नवतालिका ।
अष्टताला द्वापरे तु सप्तताला कलौ स्मृता ॥ ९२ ॥
नवतालप्रमाणे तु मुखं तालिमतं स्मृतं ।
चतुरंगुलं ललाटं स्यादधो नासा तथैव च * ॥ ९३ ॥
नासिकाधश्च हन्वन्तं चतुरंगुलमीरितं ।
चतुरंगुला भवेद्ग्रीवा तालेन हृदयं पुनः * ॥ ९४ ॥

नाभिस्तस्मादधः कार्या तालेनैकेन शोभिता ।
नाभ्यधश्च भवेन्मेढ्रं भागेनैकेन वा पुनः ॥ ९६ ॥
द्वितालौ ह्यायतावूरू जानुनी चतुरंगुले ।
जंघे ऊरुसमे कार्ये गुल्फाधश्चतुरंगुलं ।
नवतालात्मकमिदमूर्ध्वमानं बुधैस्स्मृतं ॥ ९७ ॥
शिखावधि तु केशांतं त्र्यंगुलं सर्वमानतः ।
दिशानया च विभजेत् सप्ताष्टदशतालिकं ॥ ९८ ॥
चतुस्तालात्मकौ बाहू ह्यंगुल्यंतावुदाहृतौ ।
स्कंधादिकूर्परान्तं च विंशत्यंगुलमुत्तमं ॥ ९९ ॥
त्रयोदशांगुलं चाधः कक्षायाः कूर्परान्तकं ।
अष्टाविंशत्यंगुलस्तु मध्यमांतः करस्स्मृतः ॥ १०० ॥
सप्तांगुलं करतलं मध्या पंचांगुला मता ।
सार्धत्रयांगुलोऽगुष्ठस्तर्जनीमूलपर्वभाक् ॥ १०१ ॥
पर्वद्वयात्मकोऽन्यासां पर्वाणि त्रीणि त्रीणि तु ।
अर्धांगुलेनांगुलेन हीनानामा च तर्जनी ॥ १०२ ॥
कनिष्ठिकानामिकातोऽगुलोना च प्रकीर्तिता ।
चतुर्दशांगुलौ पादौ ह्यंगुष्ठो द्व्यंगुलो मतः ॥ १०३ ॥
सार्धद्वयांगुलोऽगुष्ठस्तन्मिता वा प्रदेशिनी ।
प्रदेशिनी द्व्यंगुला तु सार्धांगुलमथेतराः ॥ १०४ ॥
शिरोज्झितौ पाणिपादौ गूढगुल्फौ प्रकीर्तितौ ।
तद्विज्ञैः प्रस्तुता ये ये मूर्तेरवयवास्सदा ॥(१०५)॥
न हीना नाधिका मानात् ते ते ज्ञेयास्सुशोभनाः ।
न स्थूला न कृशा वापि सर्वे सर्वमनोरमाः ॥ १०६ ॥
सर्वांगैस्सर्वरम्यो हि कश्चिल्लक्षे प्रजायते ।

शास्त्रमानेन यो रम्यस्स रम्यो नान्य एव हि ॥ १०७ ॥
शास्त्रमानविहीनं यदरम्यं तद्विपश्चितां ।
एकेपमेव तद्रम्यं लग्नं यत्र च यस्य हृत् ॥ १०८ ॥
अष्टांगुलं ललाटं स्यात् तावन्मात्रौ भ्रुवौ मतौ ॥ १०८ ॥
अर्धांगुला भ्रुवोर्लेखा मध्ये धनुरिवायता ।
नेत्रे च त्र्यंगुलायामे द्व्यंगुले विस्तृते शुभे ॥ १०९ ॥
तारका तत्तृतीयांशा नेत्रयोः कृष्णरूपिणी ।
द्व्यंगुलं तु भ्रुवोर्मध्यं नासामूलमथांगुलं । ॥ ११० ॥
नासाग्रविस्तरं तद्वद्द्व्यंगुलं तद्विलद्वयं ।
शुकमुखाकृतिर्नासा पुष्पवाद्द्विविधा शुभा ॥ १११ ॥
निष्पावसदृशं नासापुटयुग्मं सुशोभनं ।
कर्णौ च भ्रूसमौ ज्ञेयौ दीर्घौ च चतुरंगुलौ ॥ ११२ ॥
कर्णपाली त्र्यंगुला स्यात् स्थूला चार्धांगुला मता ।
नासावंशोऽर्धांगुलस्तु श्लक्ष्णस्तार्धांगुलोन्नतः ॥ ११३ ॥
ग्रीवामूलाच्च स्कंधांतमष्टांगुलमुदाहृतं ।
बाह्वंतरं द्वितालं स्यात् तालमात्रं स्तनान्तरं ॥ ११४ ॥
षोडशांगुलमात्रं तु कर्णयोरन्तरं स्मृतं ।
कर्णहन्वग्रान्तरं तु सदैवाष्टांगुलं मतं ॥ ११५ ॥
नासाकर्णांतरं तद्वत् तदर्धं कर्णनेत्रयोः ।
मुखं तालतृतीयांशमोष्ठावर्धांगुलौ मतौ ॥ ११६ ॥
द्वात्रिंशदंगुलः प्रोक्तः परिधिर्मस्तकस्य च ।
दशांगुला विस्तृतिस्तद्वद्द्वादशांगुलदीर्घता ॥ ११७ ॥
ग्रीवामूलस्य परिधिर्द्वाविंशत्यंगुलात्मकः ।
हृन्मध्ये परिधिर्ज्ञेयश्चतुःपंचाशदंगुलः ॥ ११८ ॥

हीनांगुलचतुस्तालपरिधिर्हृदयस्य च ।
आस्तनात् पृष्ठदेशांता पृथुता द्वादशांगुला ॥ ११९ ॥
सार्धत्रितालपरिधिः कट्याश्च द्व्यंगुलाधिकः ।
चतुरंगुल उत्सेधो विस्तारस्स्यात् षडंगुलः ॥ १२० ॥
पश्चाद्भागे नितंबस्य स्त्रीणामंगुलतोऽधिकः ।
बाह्वग्रमूलपरिधिष्षोडशाष्टादशांगुलः ॥ १२१ ॥
हस्तमूलाग्रपरिधिश्चतुर्दशदशांगुलः ।
पंचांगुला पादकरतलयोर्विस्तृतिस्स्मृता ॥ १२२ ॥
ऊरुमूलस्य परिधिर्द्वात्रिंशदंगुलात्मकः ।
ऊनविंशत्यंगुलस्स्यादूर्वग्रपरिधिस्स्मृतः ॥ १२३ ॥
जंघामूलाग्रपरिधिष्षोडशद्वादशांगुलः ।
मध्यमामूलपरिधिर्विज्ञेयश्चतुरंगुलः ॥ १२४ ॥
तर्जन्यनामिकामूलपरिधिस्सार्धत्र्यंगुलः ।
कनिष्ठिकायाः परिधिर्मूले त्र्यंगुल एव हि ॥ १२५ ॥
स्वमूलपरिधेः पादहीनोऽग्रे परिधिस्स्मृतः ।
हस्तपादांगुष्ठयोश्च चतुःपञ्चांगुलं क्रमात् ॥ १२६ ॥
पादांगुलीनां परिधिस्त्र्यंगुलस्समुदाहृतः ।
मण्डलं स्तनयोर्नाभेस्सार्धांगुलमथांगुलं ॥ १२७ ॥
सर्वांगानां यथाशोभि पाटवं परिकल्पयेत् ।
नोर्ध्वदृष्टिमधोदृष्टिं मीलिताक्षीं प्रकल्पयेत् ।
नोग्रदृष्टिन्तु प्रतिमां प्रसन्नाक्षीं विचिन्तयेत् ॥ १२८ ॥
प्रतिमायास्तृतीयांशमर्धांशं तत्सुपीठकं ॥ १२९ ॥
द्विगुणं त्रिगुणं द्वारं प्रतिमायाश्चतुर्गुणं ।
एकद्वित्रिचतुर्हस्तं पीठं देवालयस्य च ॥ १३० ॥

पीठतस्तु समुच्छ्रायो भित्तेर्दशकराधिकः ।
द्वारात्तु द्विगुणोच्छ्रायः प्रासादस्योर्ध्वभूमिभाक् ॥ १३१ ॥
शिखरं चोच्छ्रायसमं द्विगुणं त्रिगुणं तु वा ।
एकभूमिं समारभ्य सपादशतभूमिकं ॥(१३२)॥
प्रासादं कारयेच्छक्त्या ह्यष्टाश्रं पद्मसन्निभं ।
चतुर्दिङ्मण्डपं वापि चतुश्शालं समन्ततः ।
सहस्रस्तंभसंयुक्तश्चोत्तमोऽन्यस्समोऽधमः ॥ १३४॥
प्रासादे मण्डपे वापि शिखरं यदि कल्प्यते ।
स्तम्भास्तत्र न कर्तव्या भित्तिस्तत्र सुखप्रदा ॥ १३५॥
प्रासादमध्याविस्तारः प्रतिमायास्समंततः ।
षड्गुणोऽष्टगुणो वापि पुरतो वा सुविस्तरः ॥ १३६॥
वाहनं मूर्तिसदृशं सार्धं वा द्विगुणं स्मृतं ।
यत्र नोक्तं देवताया रूपं तत्र चतुर्भुजं ॥(१३७)॥
अभयं च वरं दद्याद्यत्र नोक्तं यदायुधं ।
अधःकरे तूर्ध्वकरे शंखं चक्रं तथांकुशं ॥(१३८)॥
पाशं वा डमरुं शूलं कमलं कलशं स्रुवं ।
लड्डुकं मातुलुङ्गं वा वीणां मालां च पुस्तकं ॥ १३९ ॥
मुखानां यत्र बाहुल्यं तत्र पंक्त्या निवेशनं ।
तत् पृथग्ग्रीवमुकुटं सुमुखं स्वक्षिकर्णयुक् ॥ १४० ॥
भुजानां यत्र बाहुल्यं न तत्र स्कन्धभेदनं ।
कूर्परोर्ध्वन्तु सूक्ष्माणि चिपिटानि दृढानि च ।
भुजमूलानि कार्याणि पक्षमूलानि वै यथा ॥ १४१ ॥
ब्रह्मणस्तु चतुर्दिक्षु मुखानां विनियोजनं ॥ १४२ ॥
हयग्रीवो वराहश्च नृसिंहश्च गणेश्वरः ।

मुखैर्विना नराकारो नृसिंहश्च नखैर्विना ॥ १४३ ॥
तिष्ठतीं सूपविष्टां वा स्वासने वाहनस्थितां ।
प्रतिमामिष्टदेवस्य कारयेदुक्तलक्षणां ॥ १४४ ॥
हीनश्मश्रुनिमेषां च सदा षोडशवार्षिकीं ।
दिव्याभरणवस्त्राढ्यां दिव्यवर्णक्रियां सदा ।
वस्त्रैरापादगूढां च दिव्यालंकारभूषितां ॥ १४५ ॥
हीनांग्यो नाधिकांग्यश्च कर्तव्या देवताः क्वचित् ।
हीनांगी स्वामिनं हंति ह्यधिकांगी च शिल्पिनं ॥ १४६ ॥
कृशा दुर्भिक्षदा नित्यं स्थूला रोगप्रदा सदा ।
गूढसंध्यस्थिधमनी सर्वदा सौख्यवर्धिनी ॥ १४७ ॥
वराभयाब्जशंखाढ्यहस्ता विष्णोश्च सात्त्विकी ।
मृगवाद्याभयवरहस्ता सोमस्य सात्त्विकी ॥ १४८ ॥
वराभयाब्जलड्डुकहस्तेभास्यस्य सात्त्विकी ।
पद्ममालाभयवरकरा सत्त्वाधिका रवेः ॥ १४९ ॥
वीणालुंगाभयवरकरा सत्त्वगुणा श्रियः ॥ १५० ॥
शंखचक्रगदापद्मैरायुधैरादितः पृथक् ।
षट् षड्भेदाश्च मूर्तीनां विष्ण्वादीनां भवंति हि ॥ १५१ ॥
यथोपाधिप्रभेदेन ससंयोगविभागतः ।
समस्तव्यस्तवर्णादिभेदज्ञानं प्रजायते ॥ १५२ ॥
लेख्या लेप्या सैकती च मृन्मयी पैष्टिकी तथा ।
एतासां लक्षणाभावे न कैश्चिद्दोष ईरितः ॥ १५३ ॥
बाणलिंगे स्वयंभूते चन्द्रकान्तसमुद्भवे ।
रत्नजे गण्डकोद्भूते मानदोषो न सर्वथा ॥ १५४ ॥
पाषाणधातुजायां तु मानदोषान् विचिन्तयेत् ॥ १५५ ॥

श्वेतपीतारक्तकृष्णपापाणैर्युगभेदतः ।
प्रतिमां कल्पयेच्छिल्पी यथारुच्यपरैस्स्मृता ॥ १५५″॥
श्वेता स्मृता सात्त्विकी तु पीता रक्ता तु राजसी ।
तामसी कृष्णवर्णा तु ह्युक्तलक्ष्मयुता यदि ॥ १५६″॥
सौवर्णी राजती ताम्री रैतिकी वा कृतादिपु ।
शांकरी श्वेतवर्णा वा कृष्णवर्णा तु वैष्णवी ॥ १५७″॥
सूर्यशक्तिगणेशानां ताम्रवर्णा स्मृतापि च ।
लोहसीसमयी वापि यथोद्दिष्टा स्मृता बुधैः ॥ १५८″॥
चलार्चायां स्थिरार्चायां प्रासादाद्युक्तलक्षणां ।
प्रतिमां स्थापयेन्नान्यां सर्वसौख्यविनाशिनीं ॥ १५९″॥
सेव्यसेवकभावेपु प्रतिमालक्षणं स्मृतं ।
प्रतिमायाश्च ये दोपा ह्यर्चकस्य तपोबलात् ।
सर्वत्रेश्वरचित्तस्य नाशं यान्ति क्षणान् किल ॥ १६१ ॥
देवतायाश्च पुरतो मंडपे वाहनं न्यसेत् ।
द्विबाहुर्गरुडः प्रोक्तस्सुचंचुस्स्वाक्षिपक्षयुक् ॥(१६२)॥
नराकृतिश्चञ्चुमुखो मुकुटी कवचांगदी ।
बद्धांजलिर्नम्रशीर्षस्सेव्यपादाब्जलोचनः ॥ १६३ ॥
वाहनत्वं गता ये ये देवतानां च पक्षिणः ।
कामरूपधरास्ते ते तथा सिंहवृपादयः ॥(१६४)॥
स्वनामाकृतयश्चैते कार्या दिव्या बुधैस्सदा ।
सुभूपिता देवताग्रमण्डपे ध्यानतत्पराः ॥ १६५ ॥
मार्जाराकृतिकः पीतः कृष्णचिह्नो बृहद्वपुः ।
असटो व्याघ्र इत्युक्तस्सिंहस्सूक्ष्मकटिर्महान् ॥(१६६)॥
बृहद्भ्रूगंडनेत्रस्तु बालवेपो मनोहरः ।

सटावान् धूसरोऽकृष्णलाञ्छनश्च महाबलः ॥ १६७ ॥
भेदस्सटालाञ्छनतो नाकृत्या व्याघ्रसिंहयोः ॥ १६७" ॥
गजाननं नराकारं ध्वस्तकर्णं पृथूदरं ।
बृहत्संक्षिप्तगहनपीनस्कंधांघ्रिपाणिनं ॥(१६८")॥
बृहच्छुंडं मग्नवामरदमीप्सितवाहनं ।
ईषत्कुटिलदंडाग्रवामशुंडमदक्षिणं ।
संध्यस्थिधमनीगूढं कुर्यान्मानमितं सदा ॥ १७० ॥
सार्धचतुस्तालमितश्शुंडादंडस्समस्ततः ।
दशांगुलं मस्तकं च भ्रूगंडश्चतुरंगुलः ॥ १७१ ॥
नासोत्तरोष्ठरूपा च शेषा शुंडा सपुष्करा ।
दशांगुलं कर्णदैर्घ्यं तदष्टांगुलविस्तृतं ॥ १७२ ॥
कर्णयोरंतरे व्यासो द्व्यंगुलस्तालसंमितः ।
मस्तकेऽस्यैव परिधिर्ज्ञेयष्षट्त्रिंशदंगुलः ॥ १७३ ॥
नेत्रोपान्ते च परिधिश्शीर्षतुल्यस्सदा मतः ।
सद्व्यंगुलद्वितालस्स्यान्नेत्राधःपरिधिः करे ॥ १७४ ॥
कराग्रे परिधिर्ज्ञेयः पुष्करे च दशांगुलः ।
त्र्यंगुलं कंठदैर्घ्यं तत्परिधिस्त्रिशदंगुलः ॥ १७५ ॥
परिणाहस्तूदरे च चतुस्तालात्मिकस्सदा ।
षडंगुलो नियोक्तव्योऽष्टांगुलो वापि शिल्पिभिः ॥ १७६ ॥
दंतष्षडंगुलो दीर्घस्तन्मूलपरिधिस्तथा ।
षडंगुलश्चाधरोष्ठः पुष्करं कमलान्वितं ॥ १७७ ॥
ऊरुमूलस्य परिधिष्षट्त्रिंशदंगुलो मतः ।
त्रयोविंशत्यंगुलस्स्यादूर्वग्रपरिधिस्तथा ॥ १७८ ॥
जंघामूले तु परिधिर्विंशत्यंगुलसंमितः ।

परिधिर्बाहुमूलादेरधिको द्व्यंगुलोंऽगुलः ॥ १७९ ॥
कर्णनेत्रांतरं नित्यं विज्ञेयं चतुरंगुलं ।
मूलमध्याग्रांतरं तु दशसप्तषडंगुलं ॥(१८०)॥
नेत्रयोः कथितं तज्ज्ञैर्गणपस्य विशेषतः ।
उत्सेधः पृथुता स्त्रीणां स्तने पंचांगुला मता ॥ १८१ ॥
स्त्रीकट्यां परिधिः प्रोक्तास्त्रितालो द्व्यंगुलाधिकः।
स्त्रीणामवयवान् सर्वान् सप्ततालैर्विभावयेत् ॥ १८२ ॥
सप्ततालादिमानेऽपि मुखं स्वद्वादशांगुलं ।
बालादीनामपि सदा दीर्घता तु पृथक् पृथक् ॥ १८३ ॥
शिशोस्तु कंधरा ह्रस्वा पृथु शीर्षं प्रकीर्तितं ।
कंठाधो वर्धते यादृक् तादृक् शीर्षं न वर्धते ॥ १८४ ॥
कंठाधो मुखमानेन बालस्सार्धचतुर्गुणः ।
द्विगुणश्शिश्नपर्यंतो ह्यधश्शेषं तु सक्थितः ॥ १८५ ॥
सपादद्विगुणौ हस्तौ द्विगुणौ वा मुखेन हि ।
स्थौल्ये तु नियमो नास्ति यथाशोभि प्रकल्पयेत् ॥ १८६ ॥
नित्यं प्रवर्धते बालः पञ्चाब्दात् परतो भृशं ।
स्यात् षोडशेऽब्दे सर्वांगपूर्णा स्त्री विंशतौ पुमान् ॥ १८७ ॥
ततोऽर्हति प्रमाणं तु सप्ततालादिकं सदा ।
कश्चिद्बाल्येऽपि शोभाढ्यस्तारुण्ये वार्धके क्वचित् ॥ १८८ ॥
मुखाधस्त्र्यंगुला ग्रीवा हृदयं तु नवांगुलं ।
तथोदरं च बस्तिश्च सक्थि त्वष्टादशांगुलं ॥ १८९ ॥
त्र्यंगुलं तु भवेज्जानु जंघा त्वष्टादशांगुला ।
गुल्फाधस्त्र्यंगुलं ज्ञेयं सप्ततालस्य सर्वदा ॥ १९० ॥
वेदांगुला भवेद्ग्रीवा हृदयं तु दशांगुलं ।

दशांगुलं चोदरं स्याद्बस्तिश्चैव दशांगुलः ॥ १९१ ॥
एकविंशांगुलं सक्थि जानु स्याच्चतुरंगुलं ।
एकविंशांगुला जंघा गुल्फाधश्चतुरंगुलं ॥ १९२ ॥
अष्टतालप्रमाणस्य मानमुक्तमिदं सदा ।
त्रयोदशांगुलं ज्ञेयं मुखञ्च हृदयं तथा ॥(१९३)॥
उदरं च तथा वस्तिर्दशतालेषु सर्वदा ।
गुल्फाधश्च तथा ग्रीवा जानु पञ्चांगुलं स्मृतं ॥ १९४ ॥
षड्विंशत्यंगुलं सक्थि तथा जंघा प्रकीर्तिता ।
एकांगुलो मूर्ध्नि मणिर्दशताले प्रकल्पयेत् ॥ १९५ ॥
पंचाशदंगुलौ बाहू दशताले स्मृतौ सदा ।
द्व्यंगुलौ द्व्यंगुलौ चोनौ ततो हीनप्रमाणके ॥ १९६ ॥
पाटवं तु यथाशोभि सर्वमानेषु कल्पयेत् ।
नवतालप्रमाणेन ह्यूनाधिक्यं प्रकल्पयेत् ॥ १९७ ॥
दशताले तु विज्ञेयौ पादौ पंचदशांगुलौ ।
[दशतालोर्ध्वमाने तु ताले तालेऽधिकांगुलं ।
कल्पयेन्मुखतो धीमान् शिल्पवित्सु यथा तथा ॥ १९८॥
दीर्घोरुजंघा विकटा क्रूरा स्याद्भीषणासुरी ।
पैशाची प्रतिमा ज्ञेया राक्षसी सुकृशापि वा] ॥ १९९॥
एकैकांगुलहीनौ स्तस्ततो न्यूनप्रमाणके ॥ २०० ॥
न पंचांगुलतो हीना न षडंगुलतोऽधिका ।
करस्य मध्यमा प्रोक्ता सर्वमानेषु तद्विदैः ॥ २०१ ॥
क्वचित्तु बालसदृशं सदैव तरुणं वपुः ।
मूर्तीनां कल्पयेच्छिल्पी न वृद्धसदृशं क्वचित् ॥ २०२ ॥
एवंविधान् नृपो राष्ट्रे देवान् संस्थापयेत् सदा ।

प्रतिसंवत्सरं तेपामुत्सवान् सम्यगाचरेत् ॥ २०३ ॥
देवालये मानहीनां मूर्तिं भग्नां न धारयेत् ।
प्रासादांश्च तथा देवाञ्जीर्णानुद्धृत्य यत्नतः ॥ २०४ ॥
देवतां तु पुरस्कृत्य नृत्यादीन् वीक्ष्य सर्वदा ।
न मनस्स्वोपभोगार्थं विदध्याद्यत्नतो नृपः ॥ २०५ ॥
प्रजाभिर्विधृता ये ये ह्युत्सवास्तांश्च पालयेत् ।
प्रजानन्देन संतुष्येत्तद्दुःखैर्दुःखितो भवेत् ॥ २०६ ॥

---

इति शुक्रनीतौ राष्ट्रे मध्यं चतुर्थेऽध्याये लोकधर्मनिरूपणं नाम चतुर्थं प्रकरणं

---

## चतुर्थेऽध्याये पंचमं प्रकरणं

दुष्टनिग्रहणं कुर्याद्व्यवहारानुदर्शनैः ।
स्वाज्ञया वर्तितुं शक्या स्वाधीना च सदा प्रजा ॥ १ ॥
स्वेष्टहानिकरश्शत्रुर्दुष्टः पापप्रचारवान् ।
इष्टसंपादनं न्याय्यं प्रजानां पालनं हि तत् ॥ २ ॥
शत्रोरनिष्टकरणान्निवृत्तिश्शत्रुनाशनं ।
पापाचारनिवृत्तिर्यैर्दुष्टनिग्रहणं हि तत् ॥ ३ ॥
स्वप्रजाधर्मसंस्थानसदसत्प्रविचारतः ।
जायते चार्थसंसिद्धिर्व्यवहारस्तु येन सः ॥ ४ ॥
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ।
सप्राड्विवाकस्सामात्यस्सब्राह्मणपुरोहितः ।
समाहितमतिः पश्येद्व्यवहाराननुक्रामात् ॥ ५ ॥
नैकः पश्येच्च कार्याणि वादिनोश्शृणुयाद्वचः ।
रहसि च नृपः प्राज्ञस्सभ्याश्चैव कदाचन ॥ ६ ॥
पक्षपाताधिरोपस्य कारणानि च पंच वै ।
रागलोभभयद्वेषा वादिनोश्च रहश्श्रुतिः ॥ ७ ॥
पौरकार्याणि यो राजा न करोति सुखे स्थितः ।
व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥ ८ ॥
यस्त्वधर्मेण कार्याणि मोहात् कुर्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्वंति शत्रवः ॥ ९ ॥
अस्वर्ग्या लोकनाशाय परानीकभयापहा ।
आयुर्बीजहरी राज्ञामस्ति वाक्ये स्वयं कृतिः ॥ १० ॥

तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ॥ ११ ॥
यदा न कुर्यान्नृपतिस्स्वयं कार्यविनिर्णयं ।
तदा तत्र नियुंजीत ब्राह्मणं वेदपारगं ॥(१२)॥
दांतं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरं ।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितं ॥ १३ ॥
यदा विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥ १४ ॥
यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजस्सदा ।
तद्वर्ण एव गुणिनः प्रायशस्संभवंति हि ॥ १५ ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञास्सत्यवादिनः ॥(१६)॥
निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।
राज्ञा नियोजितव्यास्ते सभ्यास्सर्वासु जातिषु ॥ १७ ॥
कीनाशाः कारुकाश्शिल्पिकुसीदिश्रेणिनर्तकाः ।
लिंगिनस्तस्कराः कुर्युस्स्वेन धर्मेण निर्णयं ॥ १८ ॥
अशक्यो निर्णयो ह्यन्यैस्तज्जैरेव तु कारयेत् ।
आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ॥ १९ ॥
न विब्रूयान्नृपो धर्मे चिकीर्षुर्हितमात्मनः ॥ १९ ॥
तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥ २० ॥
सम्यग्विज्ञानसंपन्ने नोपदेशं प्रकल्पयेत् ।
उत्कृष्टतातिशीलानां गुर्वाचार्यतपस्विनां ॥ २१ ॥
आरण्यास्तु स्वकैः कुर्युस्सार्थिकास्सार्थिकैस्सह ।
सैनिकास्सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥ २२ ॥

अभियुक्ताश्च ये यत्र यन्निबंधनियोजनाः ।
तत्रत्यगुणदोषाणां त एव हि विचारकाः ॥ २३ ॥
राजा तु धार्मिकान् सभ्यान् नियुंज्यात् सुपरीक्षितान् ।
व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव ॥ २४ ॥
लोकवेदज्ञधर्मज्ञास्सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्रास्स्युस्सा यज्ञसदृशी सभा ॥ २५ ॥
श्रोतारो वणिजस्तत्र कर्तव्यास्सुविचक्षणाः ॥ २६ ॥
अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यश्शास्त्रमुपजीवति ॥ २७ ॥
सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसं ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी ॥ २८ ॥
राज्ञा ये विदितास्सम्यक् कुलश्रेणिगणादयः ।
साहसस्तेयवर्ज्यानि कुर्युः कार्याणि ते नृणां ॥ २९ ॥
विचार्य श्रेणिभिः कार्यं कुलैर्यन्न विचारितं ।
गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ॥ ३० ॥
कुलादिभ्यो ऽधिकास्सभ्यास्तेभ्यो ऽध्यक्षो ऽधिकः कृतः ।
सर्वेषामधिको राजा धर्माधर्मनियोजकः ॥ ३१ ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्युपरि बुद्धीनां चरंतीश्वरबुद्धयः ॥ ३२ ॥
एकं शास्त्रमधीयानो न विंद्यात् कार्यनिर्णयं ।
तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥ ३३ ॥
स ब्रूते यं स धर्मस्स्यादेको वाध्यात्मचिन्तकः ।
एकद्वित्रिचतुर्वारं व्यवहारानुचिंतनं ।
कार्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठोत्तरैस्सह ॥ ३४ ॥

अर्थिप्रत्यर्थिनौ सभ्यांल्लेखकप्रेक्षकांश्च यः ।
धर्मवाक्यै रंजयति स सभास्तारतामियात् ॥ ३५ ॥
नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यंबुस्वपुरुषास्साधनाङ्गानि वै दश ॥ ३६ ॥
एतद्दशांगकरणं यस्यामध्यस्य पार्थिवः ।
न्यायान् पश्येत् कृतमतिस्सा सभाध्वरसन्निभा ॥ ३७ ॥
दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक् ।
वक्ताध्यक्षो नृपश्शास्ता सभ्याः कार्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जपं दानं दमं तथा ॥ ३९ ॥
शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः ।
गणको गणयेदर्थं लिखेन्न्याय्यं च लेखकः ॥ ४० ॥
शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥ ४१ ॥
धर्मशास्त्रानुसारेण ह्यर्थशास्त्रविवेचनं ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥ ४२ ॥
व्यवहारान् दिदृक्षुस्तु ब्राह्मणैस्सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभां ॥ ४३ ॥
धर्मासनमधिष्ठाय कार्यदर्शनमारभेत् ।
पूर्वोत्तरसमो भूत्वा राजा पृच्छेद्विवादिनौ ॥ ४४ ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
जातिजानपदान् धर्माञ्श्रेणिधर्मांस्तथैव च ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ॥ ४५ ॥
देशजातिकुलानां च ये धर्माः प्राक् प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥ ४६ ॥

उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराश्शिल्पिनश्च गवाशिनः ॥ ४७ ॥
मत्स्यादाश्च नरास्सर्वे व्यभिचाररतास्स्त्रियः ।
उत्तरे मद्यपा नार्यस्स्पृश्या नृणां रजस्वलाः ॥ ४८ ॥
खशजाताः प्रगृह्णंति भ्रातृभार्यामभर्तृकां ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ ४९ ॥
येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
त एव तैर्न दुष्येयुराचारान्नेतरस्य तु ॥ ५० ॥
[परस्त्रीधनसंलुब्धा मद्यासक्तरताः कलौ ।
विज्ञानलवदुर्दग्धाः प्रायश्श्रीसंयुताश्च ये ॥(५१)॥
तन्त्रकर्मरता वेदविमुखास्स्युस्सदैव हि ।
महादण्डेन चैतेषां कुर्यात् संसाधनं नृपः] ॥ ५२ ॥
न्यायान् पश्येत्तु मध्याह्ने पूर्वाह्ने स्मृतिदर्शनं ।
मनुष्यमारणे स्तेये साहसेऽत्ययिके सदा ।
न कालनियमस्तत्र सद्य एव विवेचनं ॥ ५४ ॥
धर्मासनगतं दृष्ट्वा राजानं मंत्रिभिस्सह ।
गच्छेन्निवेद्यमानं यत् प्रतिरुद्धमधर्मतः ॥ ५५ ॥
यथा सत्यं चिंतयित्वा लिखित्वा वा समाहितः ।
नत्वा वा प्रांजलिः प्रह्वो ह्यर्थी कार्यं निवेदयेत् ॥ ५६ ॥
यथार्हमेनमभ्यर्च्य ब्राह्मणैस्सह पार्थिवः ।
सांत्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥ ५७ ॥
काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतस्स्थितं ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥(५८)॥
केन कस्मिन् कदा कस्मात् पीडितोऽसि दुरात्मना ।

एवं पृष्ट्वा स्वभावोक्तं तस्य संशृणुयाद्वचः ॥ ५९ ॥
प्रसिद्धलिपिभाषाभिस्तदुक्तं लेखको लिखेत् ।
अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः ॥(६०)॥
चौरवत् शासयेद्राजा लेखकं द्रागतंद्रितः ।
लिखितं तादृशं सभ्या न विब्रूयुः कदाचन ॥ ६१ ॥
बलाद्गृह्णन्ति लिखितं दंडयेत्तांस्तु चौरवत् ।
प्राड्विवाको नृपाभावे पृच्छेदेव सभागतं ॥ ६२ ॥
वादिनौ पृच्छति प्राड्वा विवाको विविनक्त्यतः ।
विचारयति सभ्यैर्वा धर्माधर्मान् विवक्ति वा ॥ ६३ ॥
सभायां ये हिता योग्यास्सभ्यास्ते चापि साधवः ॥ ६३ ॥
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ६५ ॥
नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः ।
न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः ।
परैरप्रापितानर्थान्न चापि स्वमनीषया ॥ ६६ ॥
छलानि चापराधांश्च पदानि नृपतेस्तथा ।
स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ।
सूचकस्तोभकाभ्यां वा श्रुत्वा चैतानि तत्त्वतः ॥ ६७ ॥
शास्त्रेण निन्दितस्त्वर्थी नापि राज्ञा प्रचोदितः ।
आवेदयति यत् पूर्वं स्तोभकस्स उदाहृतः ॥ ६८ ॥
नृपेण विनियुक्तो यः परदोषानुवीक्षणे ।
नृपं संसूचयेज्ज्ञात्वा सूचकस्स उदाहृतः ॥ ६९ ॥
पथिभंगी पराक्षेपी प्राकारोपरि लंघकः ।
निपानस्य विनाशी च तथा चायतनस्य च ॥(७०)॥

परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अंतःपुरं वासगृहं भांडागारं महानसं ॥(७१॥)॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते ।
विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपाग्रतः ॥(७२॥)॥
पर्यंकासनबंधी चाप्यग्रस्थानविरोधकः ।
नृपातिरिक्तवेषश्च विधृतः प्रविशेत्तु यः ॥(७३॥)॥
यश्चापद्वारेण विशेदवेलायां तथैव च ।
शय्यासने पादुके च शयनासनरोहणे ॥(७४॥)॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चाप्यदत्तविहितासनः ॥(७५॥)॥
अन्यवस्त्राभरणयोस्स्वर्णस्य परिधायकः ।
स्वयंग्राहेण तांबूलं गृहीत्वा भक्षयेत्तु यः ॥(७६॥)॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवकुंठितः ॥(७७॥)॥
विचित्रितांगस्स्रग्वी च परिधानविधूनकः ।
शिरःप्रच्छादकश्चैव छिद्रान्वेषणतत्परः ॥(७८॥)॥
आसंगी मुक्तवेशश्च घ्राणकर्णाक्षिदर्शकः ।
दंतोल्लेखनकश्चैव कर्णनासाविशोधकः ।
राज्ञस्समीपे पञ्चाशच्छलान्येतानि संति हि ॥ ८० ॥
आज्ञोल्लंघनकर्तारस्स्त्रीवधो वर्णसंकरः ।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥(८१)॥
वाक्पारुष्यमवाच्यायदंडपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥ ८२ ॥
उत्क्रती सस्यघाती चाप्यग्निदश्च तथैव च ।

राज्ञो द्रोहप्रकर्ता च तन्मुद्राभेदकस्तथा ||(८३)||
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः ।
अस्वामि विक्रयं दानं भागं दंडं विचिन्वति ||(८४)||
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत् ।
राजावलीढद्रव्यं च यच्चैवांगविनाशनं ।
द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पंडिताः || ८५ ||
उद्धतः क्रूरवाग्वेषो गर्वितश्चंड एव हि ।
सहासनश्चातिमानी वादी दंडमवाप्नुयात् || ८६ ||
अर्थिना कथितं राज्ञे तदावेदनसंज्ञकं ।
कथितं प्राड्विवाकादौ सा भाषाखिलबोधिनी || ८७ ||
सपूर्वपक्षस्सभ्यादिस्तं विमृश्य यथार्थतः ।
अर्थितः पूरयेद्धीनं तत्साक्ष्यमधिकं त्यजेत् || ८८ ||
वादिनश्चिह्नितं साक्ष्यं कृत्वा राजा विमुद्रयेत् || ८९ ||
अशोधयित्वा पक्षं ये ह्युत्तरं दापयंति तान् ।
रागाल्लोभाद्भयाद्वापि स्मृत्यर्थे वाधिकारिणः ।
सभ्यादीन् दंडयित्वा तु ह्यधिकारान्निवर्तयेत् || ९० ||
ग्राह्याग्राह्यं विवादं तु सुविमृश्य समाश्रयेत् ।
संजातपूर्वपक्षं तु वादिनं संनिरोधयेत् || ९१ ||
राजाज्ञया सत्पुरुषैस्सत्यवाग्भिर्मनोहरैः ।
निरालसैंगितज्ञैश्च दृढशस्त्रास्त्रधारिभिः ||(९२)||
वक्तव्येऽर्थे ह्यतिष्ठंतमुत्क्रामंतं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनं ।
प्रत्यर्थिनं तु शपथैराज्ञया वा नृपस्य च || ९४ ||
स्थानासेधः कालकृतः प्रवासात् कर्मणस्तथा ।

चतुर्विधस्स्यादासेधो नासिद्धस्तं विलंघयेत् ॥ ९५ ॥
यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वासनादिभिः ।
आसेधयदनासेधैस्स दण्ड्यो न त्वतिक्रमी ॥ ९६ ॥
आसेधकाल आसिद्ध आसेधं योऽतिवर्तते ।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दंडभाग्भवेत् ॥ ९७ ॥
यस्याभियोगं कुरुते तत्त्वेनाशंकयाथ वा ।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥ ९८ ॥
शंकासतां तु संसर्गादनुभूतकृतेस्तथा ।
होढाभिदर्शनात् तत्त्वं विज्ञास्यति विचक्षणः ॥ ९९ ॥
अकल्यवालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥(१००)॥
मत्तोन्मत्तप्रमत्तार्तभृत्यान् नाह्वानयेन्नृपः ।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकां ।
सर्ववर्णोत्तमां कन्यां नाज्ञातप्रभुकास्स्त्रियः ॥ १०१ ॥
निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥(१०२)॥
गवां प्रचारे गोपालास्सस्यावापे कृषीवलाः ।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥(१०३)॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥ १०४ ॥
नदीसंतारकांतारदुर्देशोपप्लवादिषु ।
असिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात् ॥ १०५ ॥
कालं देशं च विज्ञाय कार्याणां च वलावलं ।
अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः ॥ १०६ ॥

ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ १०७॥
व्यवहारानभिज्ञेन ह्यन्यकार्याकुलेन च ।
प्रत्यर्थिनार्थिना तज्ज्ञः कार्यः प्रतिनिधिस्तदा ॥ १०८॥
अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणां ।
पूर्वोत्तरं वदेद्बंधुर्नियुक्तो वाथवा नरः ॥ १०९॥
पिता माता सुहृद्बंधुर्भ्राता संबंधिनोऽपि च ।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्तयेत् ॥ ११०॥
यः कश्चित् कारयेत् किंचिन्नियोगाद्येन केनचित् ।
तत् तेनैव कृतं ज्ञेयमनिवार्यं हि तत् स्मृतं ॥ १११॥
नियोगितस्यापि भृतिं विवादात् षोडशांशिकीं ।
[विंशत्यंशां तदर्धां वा तदर्धां च तदर्धिकां ॥(११२)॥
यथा द्रव्याधिकं कार्यं हीना हीना भृतिस्तथा ।
यदि बहुनियोगी स्यादन्यथा तस्य पोषणं ॥ ११३॥
धर्मज्ञो व्यवहारज्ञो नियोक्तव्योऽन्यथा न हि ।]
अन्यथा भृतिगृह्णन्तं दंडयेच्च नियोगिनं ॥ ११४॥
कार्यो नित्यो नियोगी न नृपेण स्वमनीषया ।
लोभेन त्वन्यथा कुर्वन् नियोगी दंडमर्हति ॥ ११५॥
यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दंड्यस्स्याद्व्यवहारेषु विब्रुवन् ॥ ११६॥
तदधीनकुटुंबिन्यस्स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ ११७॥
प्रवर्तयित्वा वादं तु वादिनौ तु मृतौ यदि ।
तत्पुत्रो विवदेत्तज्ज्ञो ह्यन्यथा तु निवर्तयेत् ॥ ११८॥

मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥(११९॥)॥
पारुष्ये कूटकरणे नृपद्रोहे च साहसे ।
प्रतिनिधिर्न दातव्यः कर्ता तु विवदेत् स्वयं ॥ १२०॥ ॥
आहूतो यत्र नागच्छेद्दर्पाद्बंधुबलान्वितः ।
अभियोगानुरूपेण तस्य दंडं प्रकल्पयेत् ॥ १२१॥ ॥
दूतेनाह्वानितं प्राप्ताधर्षकं प्रतिवादिनं ।
दृष्ट्वा राज्ञा तयोश्चित्यो यथार्हप्रतिभूस्त्वतः ॥ १२२॥ ॥
दास्याम्यदत्तमेतेन दर्शयामि तवान्तिके ।
एनमाधिं दापयिष्ये ह्यस्मात्ते न भयं क्वचित् ॥(१२३॥)॥
अकृतं च करिष्यामि ह्यनेनायं च वृत्तिमान् ।
अस्तीति न च मिथ्यैतदंगीकुर्यादतंद्रितः ॥(१२४॥)॥
प्रगल्भो बहुविश्वस्तश्चाधीनो विश्रुतो धनी ।
उभयोः प्रतिभूर्ग्राह्यस्समर्थः कार्यनिर्णये ॥ १२५॥ ॥
विवादिनौ संनिरुध्य ततो वादं प्रवर्तयेत् ।
स्वपुष्टौ राजपुष्टौ वा स्वभृत्या पुष्टरक्षकौ ।
ससाधनौ तत्त्वमिच्छुः कूटसाधनशंकया ॥ १२७ ॥
प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितं ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥ १२८ ॥
अन्यार्थमर्थहीनं च प्रमाणागमवर्जितं ।
लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः ॥ १२९ ॥
अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनं ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ १३० ॥
न केनचिच्छ्रुतो दृष्टस्सोऽप्रसिद्ध उदाहृतः ॥ १३०॥ ॥

अहं मूकेन संशप्तो वंध्यापुत्रेण ताडितः ।
अधीते सुस्वरं गाति स्वगेहे विहरत्ययं ॥(१३१॥)॥
धत्ते मार्गमुखद्वारं मम गेहसमीपतः ।
इति ज्ञेयं निराबाधं निष्प्रयोजनमेव तत् ॥ १३२॥ ॥
सदा मद्दत्तकन्यायां जामाता विहरत्ययं ।
गर्भं धत्ते न वंध्येयं मृतोऽयं न प्रभाषते ।
किमर्थमिति तज्ज्ञेयमसाध्यं च विरुद्धकं ॥ १३४ ॥
मद्दुःखसुखतो लोको दूयते न न नंदति ।
निरर्थमिति वा ज्ञेयं निष्प्रयोजनमेव वा ॥ १३५ ॥
श्रावयित्वा तु यत्कार्यं त्यजेदन्यद्वदेदसौ ।
अन्यपक्षाश्रयाद्वादी हीनो दंड्यश्च स स्मृतः ॥ १३६ ॥
विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते ।
प्रतिज्ञाते स्थिरीभूते लेखयेदुत्तरं ततः ॥ १३७ ॥
तत्राभियोक्ता प्राक् पृष्टो ह्यभियुक्तस्त्वनंतरं ।
प्राड्विवाकस्सदस्याद्यैर्दाप्यते ह्युत्तरं ततः ॥ १३८ ॥
श्रुतार्थस्योत्तरं लेख्यं पूर्ववेदकसन्निधौ ।
पक्षस्य व्यापकं सारमसंदिग्धमनाकुलं ।
अव्याख्यागम्यमित्येतन्निर्दुष्टं प्रतिवादिना ॥ १३९॥ ॥
संदिग्धमन्यत् प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशे व्याप्यं यत् तत्तु नैवोत्तरं भवेत् ॥ १४०॥ ॥
न चाहूतो वदेत् किंचिद्धीनो दंड्यश्च स स्मृतः ॥ १४१ ॥
पूर्वपक्षे यथार्थे तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयस्स्यात् सामादिभिरुपक्रमैः ॥ १४२ ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।

उत्तरांतर्गतं वा तत् प्रश्नैर्ग्राह्यं द्वयोरपि ॥ १४३ ॥
सत्यं मिथ्योत्तरं चैव प्रत्यवस्कंदनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधं ॥ १४४ ॥
अंगीकृतं यथार्थं यद्वाद्युक्तं प्रतिवादिना ।
सत्योत्तरं तु तज्ज्ञेयं प्रतिपत्तिश्च सा स्मृता ॥ १४५ ॥
श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति ।
अर्थतश्शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरं ॥ १४६ ॥
मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधं ॥ १४७ ॥
अर्थिना लिखितो ह्यर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कंदनं हि तत् ॥ १४८ ॥
अस्मिन्नर्थे ममानेन वादः पूर्वमभूत् तदा ।
जितोऽयमिति चेद्ब्रूयात् प्राङ्न्यायस्स उदाहृतः ॥ १४९ ॥
जयपत्रेण सभ्यैर्वा साक्षिभिर्भावयाम्यहं ।
मया जितः पूर्वमिति प्राङ्न्यायस्त्रिविधस्स्मृतः ॥ १५० ॥
अन्योऽन्ययोस्समक्षं तु वादिनोः पक्षमुत्तरं ।
न हि गृह्णंति ये सभ्या दंड्यास्ते चौरवत् सदा ॥ १५१ ॥
लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे ।
अर्थिप्रत्यर्थिनोर्वापि क्रिया कारणमिष्यते ॥ १५२ ॥
पूर्वपक्षस्स्मृतः पादो द्वितीयश्चोत्तरात्मकः ।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयाभिधः ॥ १५३ ॥
कार्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥ १५४ ॥
चतुष्पाद्व्यवहारस्स्यात् प्रतिपत्त्युत्तरं विना ।

क्रमागतान् विवादांस्तु पश्येद्वा कार्यगौरवात् ॥ १५५ ॥
यस्य वाभ्यधिका पीडा कार्यं वाभ्यधिकं भवेत् ।
वर्णानुक्रमतो वापि नयेत् पूर्वं विवादयेत् ॥ १५६ ॥
कल्पयित्वोत्तरं सभ्यैर्दातव्यैकस्य भावना ।
साध्यस्य साधनार्थं हि निर्दिष्टा यस्य भावना ॥ १५७ ॥
विभावयेत् प्रतिज्ञातं सोऽखिलं लिखितादिना ।
न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ॥ १५८ ॥
मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियां ॥ १५९ ॥
कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ।
ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनं ॥ १६० ॥
तत् साधनं तु द्विविधं मानुषं दैविकं तथा ।
त्रिधा स्याल्लिखितं भुक्तिस्साक्षिणश्चेति मानुषं ॥ १६१ ॥
दैवं घटादि तद्भव्यं भूतालाभान्नियोजयेत् ।
तत्त्वछलानुसारित्वाद्भूतं भव्यं द्विधा स्मृतं ।
तत्त्वं सत्यार्थाभिधायि कूटाद्यभिहितं छलं ॥ १६२ ॥
छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः ।
युक्त्यानुमानतो नित्यं सामादिभिरुपक्रमैः ॥ १६३ ॥
न कालहरणं कार्यं राजा साधनदर्शने ॥ १६४ ॥
महान् दोषो भवेत् कालाद्धर्मव्यापत्तिलक्षणः ।
अर्थिप्रत्यर्थिप्रत्यक्षं साधनानि प्रदर्शयेत् ॥ १६५ ॥
अप्रत्यक्षं तयोर्नैव गृह्णीयात् साधनं नृपः ।
साधनानां च ये दोषा वक्तव्यास्ते विवादिना ॥ १६६ ॥
गूढास्तु प्रकटास्सभ्यैः काले शास्त्रप्रदर्शनात् ।

अन्यथा दूषयन् दंड्यस्साध्यार्थादेव हीयते ॥ १६७ ॥
विमृश्य साधनं सम्यक् कुर्यात् कार्यविनिर्णयं ।
कूटसाधनकारी तु दंड्यः कार्यानुरूपतः ।
द्विगुणं कूटसाक्षी तु साक्ष्यलोपी तथैव च ॥ १६८ ॥
अधुना लिखितं वच्मि यथावदनुपूर्वशः ।
अनुभूतस्मारकं तु लिखितं ब्रह्मणा कृतं ॥ १६९ ॥
राजकीयं लौकिकं च द्विविधं लिखितं स्मृतं ।
स्वहस्तलिखितं वान्यहस्तेनापि विलेखितं ॥ १७० ॥
असाक्षिमत् साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ।
भागदानक्रियादानसंविद्दानऋणादिभिः ॥(१७१)॥
सप्तधा लौकिकं चैतत् त्रिविधं राजशासनं ।
शासनार्थं ज्ञापनार्थं निर्णयार्थं तृतीयकं ॥ १७२ ॥
साक्षिमाद्रिक्थ्यभिमतं भागपत्रं सुभक्तियुक् ।
सिद्धिकृच्चान्यथा पित्रा कृतमप्यकृतं स्मृतं ॥ १७३ ॥
दायादाभिमतं दानक्रयविक्रयपत्रकं ।
स्थावरस्य ग्रामपादिसाक्षिकं सिद्धिकृत् स्मृतं ॥ १७४ ॥
राज्ञा स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं प्रकृतिभिश्च मुद्रितं ॥ १७५ ॥
निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥(१७६)॥
साध्यं प्रमाणं द्रव्यं च संख्यां नाम तथात्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥(१७७)॥
क्रमात् पितॄणां नामानि पीडामाहर्तृदायकौ ।
क्षमालिंगानि चान्यानि पक्षे संकीर्त्य लेखयेत् ॥ १७८ ॥

यत्रैतानि न लिख्यंते हीनं लेख्यं तदुच्यते ।
भिन्नक्रमं व्युत्क्रमार्थं प्रकीर्णार्थं निरर्थकं ॥(१७९)॥
अतीतकाललिखितं न स्यात् तत् साधनक्षमं ।
अप्रगल्भेन च स्त्रिया वलात्कारेण यत् कृतं ॥ १८० ॥
साद्भिर्लेख्यैस्साक्षिभिश्च भोगैर्दिव्यैः प्रमाणतां ।
व्यवहारे नरो याति चेहामुत्राश्नुते सुखं ॥ १८१ ॥
स्वेतरः कार्यविज्ञानी यस्स साक्षी त्वनेकधा ।
दृष्टार्थश्च श्रुतार्थश्च कृतश्चैवाकृतो द्विधा ॥ १८२ ॥
अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु प्राग्यथा ।
दर्शनैश्श्रवणैर्येन स साक्षी तुल्यवाग्यदि ॥ १८३ ॥
यस्य नोपहता वुद्धिस्स्मृतिश्श्रोत्रं च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥ १८४ ॥
अनुभूतस्सत्यवाग्यस्सैकस्साक्षित्वमर्हति ।
उभयानुमतस्साक्षी भवत्येकोऽपि धर्मवित् ॥ १८५ ॥
यथाजाति यथावर्णं सर्वे सर्वेषु साक्षिणः ।
गृहिणो नपराधीनास्सूर्यश्चाप्रवासिनः ।
युवानस्साक्षिणः कार्यास्स्त्रियस्स्त्रीषु च कीर्तिताः ॥ १८७ ॥
साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ १८८ ॥
वालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद्बांधवस्स्नेहाद्वैरनिर्यातनादरिः ॥(१८९)॥
अभिमानाच्च लोभाच्च विजातिश्च शठस्तथा ।
उपजीवनसंकोचाद्भृत्यश्चैते ह्यसाक्षिणः ॥ १९० ॥
नार्थसंवंधिनो विद्यायौनसंवंधिनोऽपि न ।

श्रेण्यादिषु च वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारस्सर्व एव ते ॥ १९१ ॥
न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थेऽपि च सन्निधौ ।
प्रत्यक्षं वादयेत् साक्ष्यं न परोक्षं कथंचन ॥ १९३ ॥
नांगीकरोति यस्साक्ष्यं दंड्यस्स्याद्देशितो यदि ।
यस्साक्षान्नैव निर्दिष्टो नाहूतो नैव देशितः ।
ब्रूयान्मिथ्येति तथ्यं वा दंड्यस्सोऽपि नराधमः ॥ १९४ ॥
द्वैधे बहूनां वचनं समेषु गुणिनां वचः ।
तत्राधिकगुणानां च गृह्णीयाद्वचनं सदा ॥ १९५ ॥
यत्रानियुक्तोऽपीक्षेत शृणुयाद्वापि किंचन ।
पृष्टस्तत्रापि सो ब्रूयाद्यथादृष्टं यथाश्रुतं ॥ १९६ ॥
विभिन्नकाले यज्ज्ञातं साक्षिभिश्चांशतः पृथक् ।
एकैकं वादयेत्तत्र विधिरेष सनातनः ॥ १९७ ॥
स्वभावोक्तं वचस्तेषां गृह्णीयान्न बलात् क्वचित् ।
उक्ते तु साक्षिणा साक्ष्ये न प्रष्टव्यं पुनः पुनः ।
आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशं ॥ १९९ ॥
पौराणैस्सत्यवचनधर्ममाहात्म्यकीर्तनैः ।
अनृतस्यातिदोषैश्च भृशमुत्त्रसयेच्छनैः ॥ २०० ॥
देशे काले कथं कस्मात् किं दृष्टं वा श्रुतं त्वया ।
लिखितं लेखितं यत् तद्वद सत्यं तदेव हि ॥ २०१ ॥
सत्यं साक्ष्यं ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥ २०२ ॥
सत्येन पूयते साक्षी धर्मस्सत्येन वर्धते ।

तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ २०३ ॥
आत्मैव ह्यात्मनस्साक्षी गतिरात्मैव ह्यात्मनः ।
मावमंस्थास्त्वमात्मानं नृणां साक्षित्वमुत्तमं ॥ २०४ ॥
मन्यते वै पापकारी न कश्चित् पश्यतीति मां ।
तांश्च देवाः प्रपश्यंति तथा ह्यंतरपूरुषः ॥ २०५ ॥
सुकृतं यत् त्वया किंचिज्जन्मान्तरशतैः कृतं ।
तत् सर्वं तस्य जानीहि यं पराजयसे मृषा ।
समाप्नोपि च तत्पापं शतजन्मकृतं सदा ॥ २०६ ॥
साक्षिणं श्रावयेदेव सभायामरहोगतं ।
दद्याद्देशानुरूपं तु कालं साधनदर्शने ।
उपाधिं वा समीक्ष्यैव दैवराजकृतं सदा ॥ २०८ ॥
विनष्टे लिखिते राजा साक्षिभोगैर्विचारयेत् ।
लेखसाक्षिविनाशे तु सद्भोगादेव चिंतयेत् ॥ २०९ ॥
सद्भोगाभावतस्साक्षिलेखतो विमृशेत् सदा ।
केवलेन च भोगेन लेखेनापि च साक्षिभिः ।
कार्यं न चिंतयेद्राजा लोकदेशादिधर्मतः ॥ २१० ॥
कुशला लेख्यबिंबानि कुर्वन्ति कुटिलास्सदा ।
तस्मान्न लेख्यसामर्थ्यात् सिद्धिरेकान्तिकी मता ॥ २११ ॥
स्नेहलोभभयक्रोधैः कूटसाक्षित्वशंकया ।
केवलैस्साक्षिभिर्नैव कार्यं सिध्यति सर्वदा ॥ २१२ ॥
अस्वामिकं स्वामिकं वा भुंक्ते यद्बलदर्पतः ।
इति शंकितभोगैर्न कार्यं सिध्यति केवलैः ॥ २१३ ॥
शंकितव्यवहारेषु शंकयेदन्यथा न हि ।
अन्यथा शंकितान् सभ्यान् दंडयेच्चोरवन्नृपः ॥ २१४ ॥

अन्यथा शंकनान्नित्यमनवस्था प्रजायते ।
लोको विभिद्यते धर्मो व्यवहारश्च हीयते ॥ २१५'' ॥
सागमो दीर्घकालश्च निराक्रोशो निरन्तरः ।
प्रत्यर्थिसन्निधानश्च भुक्तो भोगः प्रमाणवत् ॥ २१६'' ॥
संभोगं कीर्तयेद्यस्तु केवलं नागमं क्वचित् ।
भोगश्छलापदेशेन विज्ञेयस्स तु तस्करः ॥ २१७'' ॥
आगमेऽपि बलं नैव भुक्तिस्तोकापि यत्र नो ।
यं कंचिद्दश वर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैरर्थं न स तं लब्धुमर्हति ॥ २१९ ॥
वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥ २२० ॥
अनागमं तु यो भुंक्ते बहून्यब्दशतान्यपि ।
चौरदंडेन तं पापं दंडयेत् पृथिवीपितिः ॥ २२१ ॥
अनागमापि या भुक्तिर्विच्छेदोपरमोज्झिता ।
षष्टिवर्षात्मिका सापहर्तुं शक्या न केन चित् ॥ २२२ ॥
आधिस्सीमा बालधनं निक्षेपोपनिधिस्स्त्रियः ।
राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति ॥ २२३ ॥
उपेक्षां कुर्वतस्तस्य तूष्णीभूतस्य तिष्ठतः ।
काले विपन्ने पूर्वोक्ते तत् फलं नाप्नुते धनी ॥ २२४ ॥
भोगस्संक्षेपतश्चोक्तस्तथा दिव्यमथोच्यते ॥ २२४'' ॥
प्रमादाद्धनिनो यत्र त्रिविधं साधनं न चेत् ।
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥ २२५'' ॥
चोदनाप्रतिकालश्च युक्तिलेशस्तथैव च ।
तृतीयश्शपथः प्रोक्तस्तैरेवं साधयेत् क्रमात् ॥ २२६'' ॥

विशिष्टतर्किता या च शास्त्रशिष्टाविरोधिनी ।
योजना स्वार्थसंसिद्ध्यै सा युक्तिस्तु न चान्यथा ॥ २२७ ॥
दानं प्रज्ञापना भेदस्संप्रलोभक्रिया च या ।
चित्तापनमनं चैव हेतवो हि विभावकाः ॥ २२८ ॥
अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपंचकृत्वो वा परतोऽर्थं स दाप्यते ॥ २२९ ॥
युक्तिष्वप्यसमर्थासु दिव्यैरेनं विमर्दयेत् ।
यस्माद्देवैः प्रयुक्तानि दुष्करार्थे महात्मभिः ॥(२३०)॥
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ।
सप्तर्षिभिश्च भिस्सार्थे स्वीकृतान्यात्मशुद्धये ॥ २३१ ॥
स्वमहत्त्वाच्च यो दिव्यं न कुर्याज्ज्ञानदर्पतः ।
वसिष्ठाद्याश्रितं नित्यं स नरो धर्मतस्करः ॥ २३२ ॥
प्राप्ते दिव्येऽपि न शपेद्ब्राह्मणो ज्ञानदुर्बलः ।
संहरंति च धर्मार्धं तस्य देवा न संशयः ॥ २३३ ॥
यस्तु स्वशुद्धिमन्विच्छन् दिव्यं कुर्यादतंद्रितः ।
विशुद्धो लभते कीर्तिं स्वर्गं चैवान्यथा न हि ॥ २३४ ॥
अग्निर्विषं घटस्तोयं धर्माधर्मौ च तण्डुलाः ।
शपथाश्चैव निर्दिष्टा मुनिभिर्दिव्यनिर्णये ॥ २३५ ॥
पूर्वं पूर्वं गुरुतरं कार्यं दृष्ट्वा नियोजयेत् ।
लोकप्रत्ययतः प्रोक्तं सर्वं दिव्यं गुरु स्मृतं ॥ २३६ ॥
तप्तायोगोलकं धृत्वा गच्छेन्नवपदं करे ।
तप्तांगारेषु वा गच्छेत् पद्भ्यां सप्त पदानि हि ॥ २३७ ॥
तप्ततैलगतं लोहमाषं हस्तेन निर्हरेत् ।
सुतप्तलोहपत्रं वा जिह्वया संछिहेदपि ॥ २३८ ॥

गरं प्रभक्षयेद्धस्तैः कृष्णसर्पं समुद्धरेत् ।
कृत्वा स्वस्य तुलासाम्यं हीनाधिक्यं विशोधयेत् ॥ २३९॥
स्वेष्टदेवस्नपनजमद्यादुदकमुत्तमं ।
यावन्नियमितः कालस्तावदप्सु निमज्जयेत् ॥ २४०॥
अधर्मधर्ममूर्तीनामदृष्टहरणं तथा ।
कर्षमात्रांस्तण्डुलांश्च चर्वयेच्च विशंकितः ॥ २४१॥
स्पर्शयेत् पूज्यपादांश्च पुत्रादीनां शिरांसि च ।
धनानि संस्पृशेद्वाक् तु सत्येनापि शपेत् तथा ।
दुष्कृतं प्राप्नुयां यद्यत् सर्वं नश्येत्तु सत्कृतं ॥ २४३ ॥
सहस्रेऽपहृते चाग्निः पादोने च विषं स्मृतं ।
त्रिभागोने घटः प्रोक्तो ह्यर्धे च सलिलं तथा ॥ २४४ ॥
धर्माधर्मौ तदर्धे च ह्यष्टमांशे च तण्डुलाः ।
षोडशांशे च शपथा एवं दिव्यविधिस्स्मृतः ॥ २४५ ॥
एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ २४६ ॥
शिरोवर्तिर्यदा न स्यात् तदा दिव्यं न दीयते ।
अभियोक्ता शिरस्स्थाने दिव्येषु परिकीर्त्यते ॥ २४७ ॥
अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ।
न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ॥ २४८ ॥
इच्छया त्वितरः कुर्यादितरो वर्तयेच्छिरः ॥ २४८॥
पार्थिवैश्शंकितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥ २४९॥
परदाराभिशापे च ह्यगम्यागमनेषु च ।
महापातकशस्ते च दिव्यमेव न चान्यथा ॥ २५०॥

चौर्याभिशंकायुक्तानां तप्तमाषो विधीयते ॥ २९१ ॥
प्राणांतिकविवादे तु विद्यमानेऽपि साधने ।
दिव्यमालम्बते वादी न पृच्छेत्तत्र साधनं ॥ २९२ ॥
सोपधं साधनं यत्र तद्राज्ञे भावितं यदि ।
शोधयेत्तत्तु दिव्येन राजा धर्मासनास्थितः ॥ २९३ ॥
यत्नामगोत्रैर्यल्लेख्यतुल्यं लेख्यं यदा भवेत् ।
अगृहीतधने तत्र कार्यो दिव्येन निर्णयः ॥ २९४ ॥
मानुषं साधनं न स्यात्तत्र दिव्यं प्रदापयेत् ।
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ॥(२९५)॥
स्त्रीणां शीलाभियोगेषु सर्वार्थापह्नवेषु च ।
प्रदुष्टेषु प्रमाणेषु दिव्यैः कार्यं विशोधनं ॥ २९६ ॥
महापापाभिशापेषु निक्षेपहरणेषु च ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥ २९७ ॥
प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे ।
परेभ्यश्च तथा चान्ये तं वादं शपथैर्नयेत् ॥ २९८ ॥
स्थावरेषु विवादेषु पूगश्रेणिगणेषु च ।
दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति ॥(२९९)॥
विक्रयादानसंबंधे क्रीत्वा धनमनिच्छति ।
साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत् ॥ ३०० ॥
विवाहोत्सवद्यूतेषु विवादे समुपस्थिते ।
साक्षिणस्साधनं तत्र न दिव्यं न च लेख्यकं ॥ ३०१ ॥
द्वारमार्गक्रियाभोग्यजलवाहादिषु तथा ।
भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥ ३०२ ॥
यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीं ।

मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥ २६३ ॥
यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणां ॥ २६४ ॥
प्रमाणैर्हेतुचरितैश्शपथेन नृपाज्ञया ।
वादिसंप्रतिपत्त्या वा निर्णयष्षड्विधस्स्मृतः ॥ २६५ ॥
लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥ २६६ ॥
निश्चेतुं ये न शक्यास्स्युर्वादास्सन्दिग्धरूपिणः ।
सीमाद्यास्तत्र नृपतिः प्रमाणं स्यात् प्रभुर्यतः ॥ २६७ ॥
स्वतन्त्रस्साधयन्नर्थान् राजापि स्याच्च किल्विषी ।
धर्मशास्त्राविरोधेन ह्यर्थशास्त्रं विचारयेत् ॥ २६८ ॥
राजामात्यप्रलोभेन व्यवहारस्तु दुष्यति ।
लोकोऽपि च्यवते धर्मात् कूटार्थे संप्रवर्तते ॥ २६९ ॥
अतिकामक्रोधलोभैर्व्यवहारः प्रवर्तते ।
कर्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च ।
व्याप्नोत्यतस्तु तन्मूलं छित्वा तं विमृशं नयेत् ॥ २७० ॥
अनर्थं चार्थवत् कृत्वा दर्शयंति नृपाय ये ।
अविचिन्त्य नृपस्तथ्यं मन्यते तैर्निदर्शितं ।
स्वयं करोति तद्वृत्तौ भुज्यतेऽष्टगुणं त्वघं ॥ २७२ ॥
अधर्मतः प्रवृत्तं तं नोपेक्षेरन् सभासदः ।
उपेक्ष्यमाणास्सनृपा नरकं यांत्यधोमुखाः ॥ २७३ ॥
धिग्दंडस्त्वथ वाग्दण्डस्सभ्यायत्तौ तु तावुभौ ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥ २७४ ॥
तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।

द्विगुणं दण्डमाधाय पुनस्तत् कार्यमुद्धरेत् ॥ २७५ ॥
साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्वचर्यावसितानां च प्रोक्तः पौनर्भवो विधिः ॥ २७६ ॥
अमात्यः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्सर्वं नृपतिः कुर्यात् तान् सहस्रं तु दण्डयेत् ॥ २७७ ॥
न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ।
सन्दर्शिते सभ्यदोषे तदुद्धृत्य नृपो नयेत् ॥ २७८ ॥
प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥ २७९ ॥
सभ्यादिभिर्विनिर्णिक्तं विधृतं प्रतिवादिना ।
दृष्ट्वा राजा तु जयिने प्रदद्याज्जयपत्रकं ॥ २८० ॥
अन्यथा ह्यभियोक्तारं निरुध्याद्बहुवत्सरं ।
मिथ्याभियोगसदृशमर्हयेदभियोगिनं ॥ २८१ ॥
कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति ।
प्रजास्तमनुवर्तन्ते समुद्रमिव सिंधवः ॥ २८२ ॥
जीवतोरस्वतंत्रस्स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥ २८३ ॥
अभावे बीजिनो माता तदभावे तु पूर्वजः ।
स्वातंत्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतं ॥ २८४ ॥
यास्सर्वाः पितृपत्न्यस्स्युस्तासु वर्तेत मातृवत् ।
स्वसमैकेन भागेन सर्वास्ताः प्रतिपालयन् ॥ २८५ ॥
अस्वतंत्राः प्रजास्सर्वास्स्वतंत्रः पृथिवीपतिः ।
अस्वतंत्रस्स्मृतश्शिष्य आचार्ये तु स्वतंत्रता ॥ २८६ ॥
सुतस्य सुतदाराणां वशित्वमनुशासने ।

विक्रये चैव दाने च वशित्वं न सुते पितुः ॥ २८७ ॥
स्वतंत्रास्सर्व एवैते परतंत्रेषु नित्यशः ।
अनुशिष्टौ विसर्गे वाविसर्गे चेश्वरा मताः ॥ २८८ ॥
मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ २८९ ॥
भार्या पुत्रश्च दासश्च त्रय एवाधनास्स्मृताः ।
यत् ते समधिगच्छंति यस्यैते तस्य तद्धनं ॥ २९० ॥
वर्तते यस्य यद्धस्ते तस्य स्वामी स एव न ।
अन्यस्वमन्यहस्तेषु चौर्याद्यैः किं न दृश्यते ॥ २९१ ॥
तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि ।
अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ॥ २९२ ॥
विदितोऽर्थागमश्शास्त्रे तथा वर्णैः पृथक् पृथक् ।
शास्ति तच्छास्त्रधर्मं यन्म्लेच्छानामपि तत् सदा ॥ २९३ ॥
पूर्वाचार्यैस्तु कथितं लोकानां स्थितिहेतवे ।
समानभागिनः कार्याः पुत्रास्स्वस्य च वै स्त्रियः ॥ २९४ ॥
स्वभागार्धहरा कन्या दौहित्रस्तु तदर्धभाक् ।
मृतेऽधिपेऽपि पुत्राद्या उक्तभागहरास्स्मृताः ॥ २९५ ॥
मात्रे दद्याच्चतुर्थांशं भागिन्यै मातुरर्धकं ।
तदर्धं भागिनेयाय शेषं सर्वं हरेत् सुतः ॥ २९६ ॥
पुत्रो नप्ता धनं पत्नी हरेत् पुत्री च तत्सुतः ।
माता पिता च भ्राता च पूर्वालाभाच्च तत्सुतः ॥ २९७ ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातंत्र्यमिष्यते ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥ २९८ ॥
ऊढया कन्यया वापि पत्युः पितृगृहाच्च यत् ।

मातृपित्रादिभिर्दत्तं धनं सौदायिकं स्मृतं ॥ २९९ ॥
पित्रादिधनसंबंधहीनं यद्यदुपार्जितं ।
येन सः काममश्नीयादविभाज्यं धनं हि तत् ॥ ३०० ॥
जलतस्कररराजाग्निव्यसने समुपस्थिते ।
यस्तु स्वशक्त्या संरक्षेत् तस्यांशो दशमस्स्मृतः ॥ ३०१ ॥
हेमकारादयो यत्र शिल्पं संभूय कुर्वते ।
कार्यानुरूपं निर्वेशं लभेरंस्ते यथार्हतः ॥ ३०२ ॥
संस्कर्ता तत्कलाभिज्ञश्शिल्पी प्रोक्तो मनीषिभिः ॥ ३०२ ॥
हर्म्यं देवगृहं वापि वापिकोपस्कराणि च ।
संभूय कुर्वतां तेषां प्रमुख्यो द्व्यंशमर्हति ॥ ३०३ ॥
नर्तकानामेव धर्मस्सद्भिरेष उदाहृतः ।
तालज्ञो लभतेऽर्थार्धं गायनास्तु समांशिनः ॥ ३०४ ॥
परराष्ट्राद्धनं यत् स्याच्चौरैस्स्वाम्याऽज्ञया हृतं ।
राज्ञे षष्ठांशमुद्धृत्य विभजेरन् समांशकं ॥ ३०५ ॥
तेषां चेत् प्रसृतानां च ग्रहणं समवाप्नुयात् ।
तन्मोक्षार्थं च यद्दत्तं वहेयुस्ते समांशतः ॥ ३०६ ॥
प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥ ३०७ ॥
समो न्यूनोऽधिको ह्यंशो योऽनुक्षिप्तस्तथैव सः ।
व्ययं दद्यात् कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥ ३०८ ॥
वणिजानां कर्षकाणामेष एव विधिस्स्मृतः ॥ ३०९ ॥
सामान्यं याचितं न्यास आधिर्दासश्च तद्धनं ।
अन्वाहितं च निक्षेपस्सर्वस्वं चान्वये सति ।
आपत्स्वपि न देयानि नव वस्तूनि पंडितैः ॥ ३१० ॥

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसं ॥ ३११ ॥
अस्वामिकेभ्यश्चौरेभ्यो विगृह्णाति धनं तु यः ।
अव्यक्तमेव क्रीणाति स दंड्यश्चौरवन्नृपैः ॥ ३१२ ॥
ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणं ।
अदुष्टं चर्त्विजं याज्यो विनेयौ तावुभावपि ॥ ३१३ ॥
द्वात्रिंशांशं षोडशांशं लाभं पण्ये नियोजयेत् ।
नान्यथा तद्व्ययं ज्ञात्वा प्रदेशाद्यनुरूपतः ।
वृद्धिं हित्वा ह्यर्धधनैर्वाणिज्यं कारयेत् सदा ॥ ३१५ ॥
मूलात्तु द्विगुणा वृद्धिर्गृहीता चाधमर्णिकात् ।
तदोत्तमर्णमूलं तु दापयेन्नाधिकं ततः ॥ ३१६ ॥
धनिकाश्चक्रवृद्ध्यादिमिषतस्तु प्रजाधनं ।
संहरंति ह्यतस्तेभ्यो राजा संरक्षयेत् प्रजां ॥ ३१७ ॥
समर्थस्सन्न ददाति गृहीतं धनिकाद्धनं ।
राजा संदापयेत्तस्मात् सामदंडविकर्षणैः ॥ ३१८ ॥
लिखितं तु यदा यस्य नष्टं तेन प्रबोधितं ।
विज्ञाय साक्षिभिस्सम्यक् पूर्ववद्दापयेत्तदा ॥ ३१९ ॥
अदत्तं यश्च गृह्णाति सुदत्तं पुनरिच्छति ।
दंडनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥ ३२० ॥
कूटपण्यस्य विक्रेता स दंड्यश्चौरवत् सदा ।
दृष्ट्वा कार्याणि च गुणाञ्छिल्पिनां भृतिमावहेत् ॥ ३२१ ॥
पंचमांशं चतुर्थांशं तृतीयांशं तु कर्षयेत् ।
अर्धं वा राजताद्राजा नाधिकं तु दिने दिने ॥ ३२२ ॥
विद्रुतं न तु हीनं स्यात् स्वर्णं पलशतं शुचि ।

चतुश्शतांशं रजतं ताम्रं न्यूनं शतांशकं ॥ ३२३ ॥
वंगं च जसदं सीसं हीनं स्यात् षोडशांशकं ।
अयोऽष्टांशं त्वन्यथा तु दंड्यश्शिल्पी सदा नृपैः ॥ ३२४ ॥
सुवर्णं द्विशतांशं तु रजतं च शतांशकं ।
हीनं सुघटिते कार्ये सुसंयोगे तु वर्धते ॥(३२५)॥
षोडशांशं त्वन्यथा हि दंड्यस्स्यात् स्वर्णकारकः ।
संयोगघटनं दृष्ट्वा वृद्धिं ह्रासं प्रकल्पयेत् ॥ ३२६ ॥
स्वर्णस्योत्तमकार्ये तु भृतिस्त्रिंशांशकी मता ।
षष्ट्यंशकी मध्यकार्ये हीनकार्ये तदर्धकी ॥ ३२७ ॥
तदर्धा कटके ज्ञेया विद्रुते तु तदर्धकी ।
उत्तमे राजते त्वर्धा तदर्धा मध्यमे स्मृता ।
हीने तदर्धा कटके तदर्धा संप्रकीर्तिता ॥ ३२८ ॥
पादमात्रा भृतिस्ताम्रे वंगे च जसदे तथा ।
लोहेऽर्धा वा समा वापि द्विगुणाष्टगुणाथवा ॥ ३२९ ॥
धातूनां कूटकारी तु द्विगुणो दंडमर्हति ॥ ३३० ॥
लोकप्रचारैरुत्पन्नो मुनिभिर्विधृतः पुरा ।
व्यवहारोऽनंतपथस्स वक्तुं नैव शक्यते ॥ ३३१ ॥
उक्तं राष्ट्रप्रकरणं समासात् पंचमं तथा ।
अत्रानुक्ता गुणा दोषास्ते ज्ञेया लोकशास्त्रतः ॥ ३३२ ॥

---

इति शुक्रनीतौ राष्ट्रेऽन्त्यं चतुर्थेऽध्याये राजधर्मनिरूपणं
नाम पंचमं प्रकरणं

---

## चतुर्थेऽध्याये षष्ठं प्रकरणं

षष्ठं दुर्गप्रकरणं प्रवक्ष्यामि समासतः ।
खातकंटकपाषाणैर्दुष्पथं दुर्गमैरिणं ॥ १ ॥
परितस्तु महाखातं पारिखं दुर्गमेव तत् ।
इष्टकोपलमृद्भित्तिप्राकारं पारिघं स्मृतं ॥ २ ॥
महाकंटकवृक्षौघैर्व्याप्तं तद्वनदुर्गमं ।
जलाभावस्तु परितो धन्वदुर्गं प्रकीर्तितं ॥ ३ ॥
जलदुर्गं स्मृतं तज्ज्ञैरासमन्तान्महाजलं ।
सुवारिपृष्ठोच्चधरं विविक्ते गिरिदुर्गमं ॥ ४ ॥
अभेद्यं व्यूहविद्वीरव्याप्तं तत् सैन्यदुर्गमं ।
सहायदुर्गं तज्ज्ञेयं शूरानुकूलबांधवं ॥ ५ ॥
पारिखादैरिणं श्रेष्ठं पारिघं तु ततो वनं ।
ततो धन्व जलं तस्माद्गिरिदुर्गं ततस्स्मृतं ॥ ६ ॥
सहायसैन्यदुर्गे तु सर्वदुर्गप्रसाधिके ।
ताभ्यां विनान्यदुर्गाणि निष्फलानि महीभुजां ॥ ७ ॥
श्रेष्ठं तु सर्वदुर्गेभ्यस्सेनादुर्गं स्मृतं बुधैः ।
तत्साधकानि चान्यानि तद्रक्षेन्नृपतिस्सदा ॥ ८ ॥
सेनादुर्गं तु यस्य स्यात् तस्य वश्या तु भूरियं ।
विना तु सैन्यदुर्गेण दुर्गमन्यत् तु बंधनं ॥ ९ ॥
आपत्कालेऽन्यदुर्गाणामाश्रयश्चोत्तमो मतः ॥ ९‴॥
एकश्शतं योधयति दुर्गस्थोऽस्त्रधरो यदि ।
शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ॥ १०‴॥

शूरस्य सैन्यदुर्गस्य सर्वं दुर्गमिव स्थलं ।
युद्धसंभारपुष्टानि राजा दुर्गाणि धारयेत् ।
धान्यवीरास्त्रपुष्टानि कोशपुष्टानि वै तथा ॥ १२ ॥
सहायपुष्टं यद्दुर्गं तत्तु श्रेष्टतरं मतं ।
सहायपुष्टदुर्गेण विजयो निश्चयात्मकः ॥ १३ ॥
यद्यत् सहायपुष्टं तु तत्सर्वं सफलं भवेत् ।
परस्परानुकूल्यं तु दुर्गाणां विजयप्रदं ॥ १४ ॥

---

इति शुक्रनीतौ चतुर्थेऽध्याये दुर्गनिरूपणं नाम षष्टं प्रकरणं

---

## चतुर्थेऽध्याये सप्तमं प्रकरणं

दौर्गं संक्षेपतः प्रोक्तं सैन्यं सप्तममुच्यते ।
सेना शस्त्रास्त्रसंयुक्तमनुष्यादिगणात्मिका ॥ १ ॥
स्वगमान्यगमा चेति द्विधा सैव पृथक् त्रिधा ।
दैव्यासुरी मानवी च पूर्वपूर्वा बलाधिका ॥ २ ॥
स्वगमा या स्वयं गंत्री यानगाऽन्यगमा स्मृता ।
पादातं स्वगमं चान्यद्रथाश्वगजगं त्रिधा ॥ ३ ॥
सैन्याद्विना नैव राज्यं न धनं न पराक्रमः ॥ ३'' ॥
बलिनो वशगास्सर्वे दुर्बलस्य च शत्रवः ।
भवंत्यल्पजनस्यापि नृपस्य तु न किं पुनः ॥ ४'' ॥
शारिरं हि बलं शौर्यबलं सैन्यबलं तथा ।
चतुर्थमास्त्रिकबलं पंचमं धीबलं स्मृतं ।
षष्ठमायुर्बलं त्वेतैरुपेतो विष्णुरेव सः ॥ ६ ॥
न बलेन विनाप्यल्पं रिपुं जेतुं क्षमास्सदा ।
देवासुरनरास्त्वन्योपायैर्नित्यं भवंति हि ॥ ७ ॥
बलमेव रिपोर्नित्यं पराजयकरं परं ।
तस्माद्बलमभेद्यं तु धारयेद्यत्नतो नृपः ॥ ८ ॥
सेनाबलं तु द्विविधं स्वीयं मैत्रं च तद्द्विधा ।
मौलसाद्यस्कभेदाभ्यां सारासारं पुनर्द्विधा ॥ ९ ॥
अशिक्षितं शिक्षितं च गुल्मीभूतमगुल्मकं ।
दत्तास्त्रादि स्वशस्त्रास्त्रं स्ववाहि दत्तवाहनं ॥ १० ॥
सौजन्यात् साधकं मैत्रं स्वीयं भृत्या प्रपालितं ।

मौलं वह्वब्दानुबंधि साद्यस्कं यत् तदन्यथा ॥ ११ ॥
सुयुद्धकामुकं सारमसारं विपरीतकं ।
शिक्षितं व्यूहकुशलं विपरीतमशिक्षितं ॥ १२ ॥
गुल्मीभूतं साधिकारि स्वस्वामिकमगुल्मकं ।
दत्तास्त्रादि स्वामिना यत् स्वशस्त्रास्त्रमतोऽन्यथा ॥ १३ ॥
कृतगुल्मं स्वयंगुल्मं तद्वच्च दत्तवाहनं ।
आरण्यकं किरातादि यत् स्वाधीनं स्वतेजसा ॥ १४ ॥
उत्सृष्टं रिपुणा वापि भृत्यवर्गे निवेशितं ।
भेदाधीनं कृतं शत्रोस्सैन्यं शत्रुबलं स्मृतं ।
उभयं दुर्बलं प्रोक्तं केवलं साधकं न तत् ॥ १५ ॥
समैर्नियुद्धकुशलैर्व्यायामैर्नतिभिस्तथा ।
वर्धयेद्बाहुयुद्धार्थं भोज्यैश्शारीरकं बलं ॥ १६ ॥
मृगयाभिस्तु व्याघ्राणां शस्त्रास्त्राभ्यासतस्सदा ।
वर्धयेच्छूरसंयोगात् सम्यक् शौर्यबलं नृपः ॥ १७ ॥
सेनाबलं सुभृत्या तु तपोऽभ्यासैस्तथास्त्रिकं ।
वर्धयेच्छास्त्रचतुरसंयोगाद्धीबलं सदा ॥ १८ ॥
सत्क्रियाभिश्चिरस्थायि नित्यं राज्यं भवेद्यथा ।
स्वगोत्रे तु तथा कुर्यात्तदायुर्बलमुच्यते ।
यावद्गोत्रे राज्यमस्ति तावदेव स जीवति ॥ २० ॥
चतुर्गुणं हि पादातमश्वतो धारयेत् सदा ।
पंचमांशांस्तु वृषभानष्टांशांश्च क्रमेलकान् ॥(२१)॥
चतुर्थांशान् गजानुष्ट्राद्गजार्धांश्च रथान् सदा ।
रथात्तु द्विगुणं राजा बृहन्नालीकमेव च ॥ २२ ॥
पदातिबहुलं सैन्यं मध्याश्वं तु गजाल्पकं ।

तथा वृषोष्ट्रसामान्यं रक्षेन्नागाधिकं न हि ॥ २३ ॥
सवयस्सारवेषोच्चशस्त्रास्त्रं तु पृथक् शतं ।
लघुनालिकयुक्तानां पदातीनां शतत्रयं ॥(२४)॥
अशीत्यश्वान् रथं चैकं वृहन्नालद्वयं तथा ।
उष्ट्रान् दश गजौ द्वौ तु शकटौ षोडशर्षभान् ॥(२५)॥
तथा लेखकषट्कं हि मंत्रित्रितयमेव च ।
धारयेन्नृपतिस्सम्यग्वत्सरे लक्षकर्षभाक् ॥ २६ ॥
सम्भारदानभोगार्थं धनं सार्धसहस्रकं ।
लेखकार्थे शतं मासि मंत्र्यर्थे तु शतत्रयं ॥(२७)॥
त्रिशतं दारपुत्रार्थे विद्वदर्थे शतद्वयं ।
साद्यश्वपदगार्थं हि राजा चतुस्सहस्रकं ॥(२८)॥
गजोष्ट्रवृषनालार्थं व्ययीकुर्याच्चतुश्शतं ।
शेषं कोशे धनं स्थाप्यं राज्ञा सार्धसहस्रकं ॥ २९ ॥
प्रतिवर्षं स्ववेशार्थं सैनिकेभ्यो धनं हरेत् ॥ २९"॥
लोहसारमयश्चक्रसुगमो मंचकासनः ।
स्वांदोलायितरूढस्तु मध्यमासनसारथिः ॥(३०")॥
शस्त्रास्त्रसंधार्युदर इष्टच्छायो मनोरमः ।
एवंविधो रथो राज्ञा रक्ष्यो नित्यं सदश्वकः ॥ ३१"॥
नीलतालुर्नीलजिह्वो वक्रदन्तो ह्यदन्तकः ।
दीर्घद्वेषी क्रूरमदस्तथा पृष्ठविधूनकः ॥(३२")॥
दशाष्टोननखो मन्दो भूविशोधनपुच्छकः ।
एवंविधोऽनिष्टगजो विपरीतश्शुभावहः ॥ ३३"॥
भद्रो मन्द्रो मृगो मिश्रो गजो जात्या चतुर्विधः ॥ ३४ ॥
मध्वाभदंतस्सबलस्समांगो वर्तुलाकृतिः ।

सुमुखोऽवयवश्रेष्टो ज्ञेयो भद्रगजस्सदा ॥ ३५ ॥
स्थूलकुक्षिस्सिंहदृक् च वृहत्त्वग्गलशुण्डकः ।
मध्यमावयवो दिर्घकायो मन्द्रगजस्स्मृतः ॥ ३६ ॥
तनुकण्ठदन्तकर्णशुण्डस्स्थूलाक्ष एव हि ।
सुहूस्वाधरमेढ्रस्तु वामनो मृगसंज्ञकः ॥ ३७ ॥
एषां लक्ष्मैर्विमिलितो गजो मिश्र इति स्मृतः ।
भिन्नं भिन्नं प्रमाणं तु त्रयाणामपि कीर्तितं ॥ ३८ ॥
गजमाने ह्यंगुलं स्यादष्टभिस्तु यवोदरैः ।
चतुर्विंशत्यंगुलैस्तैः करः प्रोक्तो मनीषिभिः ॥ ३९ ॥
सप्तहस्तोन्नतिर्भद्रे ह्यष्टहस्तप्रदीर्घता ।
परिणाहो दशकर उदरस्य भवेत् सदा ॥ ४० ॥
प्रमाणं मंद्रमृगयोर्हस्तहीनं क्रमादतः ।
कथितं दैर्घ्यसाम्यं तु मुनिभिर्भद्रमंद्रयोः ॥ ४१ ॥
वृहद्भ्रूगण्डफालस्तु धृतशीर्षगतिस्सदा ।
गजश्श्रेष्ठस्तु सर्वेषां शुभलक्षणसंयुतः ॥ ४२ ॥
पञ्चयवांगुलेनैव वाजिमानं पृथक् स्मृतं ॥ ४२ ॥
चत्वारिंशांगुलमुखो वाजी यश्चोत्तमोत्तमः ।
षट्त्रिंशदंगुलमुखो ह्युत्तमः परिकीर्तितः ॥ ४३ ॥
द्वात्रिंशदंगुलमुखो मध्यमस्स उदाहृतः ।
अष्टाविंशत्यंगुलो यो मुखे नीचः प्रकीर्तितः ॥ ४४ ॥
वाजिनां मुखमानेन सर्वावयवकल्पना ।
औच्चं तु मुखमानेन त्रिगुणं परिकीर्तितं ॥ ४५ ॥
शिरोमणिं समारभ्य पुच्छमूलांतमेव हि ।
तृतीयांशाधिकं दैर्घ्यं मुखमानाच्चतुर्गुणं ।

परिणाहस्तूदरस्य त्रिगुणस्त्र्यंगुलाधिकः ॥ ४७ ॥
[साधारणमिदं मानमुच्यते विस्तरादथ ॥ ४७॥
अष्टाविंशांगुलमुखं पुरस्कृत्य यथा तथा ।
शफोच्चं त्र्यंगुलं ज्ञेयं मणिबंधोऽगुलाधिकः ॥ ४८॥
चतुर्हस्तांगुला जंघा त्र्यंगुलं जानु कीर्तितं ।
चतुर्दशांगुलावूरू कूर्परांतस्स्मृतो बुधैः ॥ ४९॥
अष्टत्रिंशांगुलं ज्ञेयं स्कंधांतं कूर्परादितः ।
प्रत्यगूरू मुखसमौ जंघोना पादमानतः ॥ ५०॥
प्रोक्तोच्चता चाथ दैर्घ्यमुच्यते शास्त्रसङ्गतं ॥ ५१ ॥
षष्ठांशेनाधिका ग्रीवा द्विगुणा सुप्रसारिता ।
मुखतश्चोच्छ्रिता सार्धपादहीना तु पूर्वतः ॥ ५२ ॥
स्कंधादि मुष्कमूलांतं ग्रीवातुल्यं तु तत्र हि ।
द्व्यंशषष्ठं त्रिकं यावत् शेषमंसं प्रकल्पयेत् ॥ ५३ ॥
मुखार्धं पुच्छदण्डं च शिश्न आण्डौ तदर्धकौ ।
कर्णष्षडंगुलो दीर्घश्चतुःपञ्चांगुलः क्वचित् ॥ ५४ ॥
परिणाहश्शफस्योक्तो मुखार्धेनांगुलाधिकः ।
तदर्धो मणिबंधस्य जंघायाः परिधिस्स्मृतः ॥ ५५ ॥
दशैकांगुलपरिधी रम्योरोः कीर्तितो बुधैः ।
पृष्ठोरुपरिधिर्मूले त्रिष्षष्ठांशामुखेषु च ॥ ५६ ॥
बहिरंतर्धनुःखण्डसदृशा सरभोग्रजा ।
मणिबंधमणेर्ज्ञेयः परिधिश्च नवांगुलः ॥ ५७ ॥
अन्त्यजंघादिपरिधिर्विज्ञेयः पूर्ववद्बुधैः ।
अथोर्वोरंतरे चिह्नमंगुष्ठं पक्षमूलयोः ॥ ५८ ॥
सार्धांगुलं सटास्थानं ग्रीवोपरि सुविस्तृतं ।

शिरोमणिं समारभ्य दीर्घं स्कन्धान्तमुत्तमं ॥ ५९ ॥
अधोगमा सटा कार्या हस्तमात्रायता शुभा ।
सार्धहस्ता द्विहस्ता वा पुच्छवालास्सुशोभनाः ॥ ६० ॥
सप्ताष्टनवदशभिरंगुलैः कर्णदीर्घता ।
तथा तद्विस्तृतिर्ज्ञेया त्र्यंगुला चतुरंगुला ॥ ६१ ॥
न स्थूला नापि चिपिटा ग्रीवा मयूरसन्निभा ।
ग्रीवाग्रपरिधिस्तुल्यो मुखेनाधिकमुष्टिकः ॥ ६२ ॥
ग्रीवामूलस्य परिधिर्द्विगुणो विदशांगुलः ।
तृतीयांशविहीनं तु तत्क्रोडं वक्ष ईरितं ॥ ६३ ॥
नेत्रोपरि परीणाहो मुखेनाष्टांगुलाधिकः ।
नासिकोपरि नेत्राधो मुखस्य परिधिस्तु यः ॥(६४)॥
तृतीयांशविहीनेन मुखेन सदृशो भवेत् ।
द्व्यंगुलं नेत्रविस्तृतिस्त्र्यंगुला तस्य दीर्घता ॥ ६५ ॥
अर्धांगुलाधिका वापि विस्तृतिर्दीर्घतांगुला ।
मुखतृतीयांशमेतद्भ्रुवोर्मध्येऽन्तरं स्मृतं ॥ ६६ ॥
नेत्राग्रयोरन्तरं तु पञ्चमांशं मुखस्य हि ।
कर्णयोरन्तरं तद्वत् कर्णनेत्रांतरं तथा ॥ ६७ ॥
भूस्थयोश्शफयोः प्रोक्तं यततं कर्णसंमितं ।
मणिनेत्रमांतरं च भ्रुवोरन्तरमेव हि ॥ ६८ ॥
सक्थ्यंगुलं तृतीयांशं नासानेत्रान्तरं तथा ।
त्रिभागपूरणं प्रोथस्त्तोष्ठश्च परिकीर्तितः ॥ ६९ ॥
नासारन्ध्रांतरं चैव तद्दैर्घ्यं नवमांशकं ।
कायो नरार्धविस्तारस्त्रिके हृदयसंमितः ॥ ७० ॥
चतुर्थांशं तु हृदयं बाहुमूलादधस्स्मृतं ।

षष्ठांशमन्तरं बाव्होर्हृत्समीपे प्रकीर्तितं ॥ ७१ ॥
अधरोष्ठोऽनुचिबुकं सार्धांगुलमथोन्नतं ।
शोभते चोन्नतग्रीवो नतपृष्ठस्सदा हयः ॥ ७२ ॥
यद्रूपं कर्तुमुद्युक्तस्तद्विंबं वीक्ष्य सर्वतः ।
अदृष्ट्वा कस्य यद्रूपं न कर्तुं क्षमते हि तत् ॥ ७३ ॥
शिल्प्यग्रे वाजिनं ध्यात्वा कुर्यादवयवानतः ।
दिशानया च विभूतेस्सर्वमानानि वाजिनां] ॥ ७४ ॥
श्मश्रुहीनमुखः कांतप्रगल्भोत्तुंगनासिकः ।
दीर्घोद्धतग्रीवमुखो ह्रस्वकुक्षिखुरश्रुतिः ॥(७५)॥
तुरप्रचण्डवेगश्च हंसमेघसमस्वनः ।
नातिक्रूरो नातिमृदुर्देवसत्त्वो मनोरमः ।
सुकांतिगंधवर्णश्च सद्गुणभ्रमरान्वितः ॥ ७६॥
भ्रमरस्तु द्विधावर्तो वामदक्षिणभेदतः ।
पूर्णोऽपूर्णः पुनर्द्वेधा दीर्घो ह्रस्वस्तथैव च ॥ ७७॥
स्त्रीपुंदेहे वामदक्षौ यथोक्तफलदौ क्रमात् ।
न तथा विपरीतौ तु शुभाशुभफलप्रदौ ॥ ७८॥
नीचोर्ध्वतिर्यङ्मुखतः फलभेदो भवेत्तयोः ॥ ७९ ॥
शंखचक्रगदापद्मवेदिस्वास्तिकसन्निभः ।
प्रासादतोरणधनुस्सुपूर्णकलशाकृतिः ।
स्वस्तिकस्रङ्मीनखड्गश्रीवत्साभश्शुभो भ्रमः ॥ ८०॥
नासिकाग्रे ललाटे च शंखे कण्ठे च मस्तके ।
आवर्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥ ८१॥
हृदि स्कंधे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमास्संप्रकीर्तिताः ॥ ८२॥

ललाटे यस्य चावर्तद्वितयस्य समुद्भवः ।
मस्तके च तृतीयस्य पूर्णहर्षोऽश्व उत्तमः ॥ ८३ ॥
पृष्ठवंशे यदावर्तो यस्यैकस्संप्रजायते ।
स करोत्यश्वसंघातान् स्वामिनस्सूर्यसंज्ञकः ॥ ८४ ॥
त्रयो यस्य ललाटस्था आवर्तास्तिर्यगुत्तराः ।
त्रिकूटस्स परिज्ञेयो वाजिवृद्धिकरस्सदा ॥ ८५ ॥
ऐवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
समावर्तास्स वाजीशो जायते नृपमन्दिरे ॥ ८६ ॥
कपोलस्थौ यदावर्तौ दृश्येते यस्य वाजिनः ।
यशोवृद्धिकरौ प्रोक्तौ राज्यवृद्धिकरौ मतौ ॥ ८७ ॥
एको वाथ कपोलस्थो यस्यावर्तः प्रदृश्यते ।
सर्वनामा स विख्यातस्स इच्छेत् स्वामिनाशनं ॥ ८८ ॥
गंडसंस्थो यदावर्तो वाजिनो दक्षिणाश्रितः ।
स करोति महासौख्यं स्वामिनं शिवसंज्ञिकः ॥ ८९ ॥
तद्वद्वामाश्रितः क्रूरः प्रकरोति धनक्षयं ।
इन्द्राक्षौ तावुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥ ९० ॥
कर्णमूले यदावर्तौ स्तनमध्ये तथापरौ ।
विजयाख्यौ उभौ तौ तु युद्धकाले यशःप्रदौ ॥ ९१ ॥
स्कन्धपार्श्वे यदावर्तो स भवेत् पद्मलक्षणः ।
करोति विविधान् पद्मान् स्वामिनस्सततं सुखं ॥ ९२ ॥
नासामध्ये यदावर्त एको वा यदि वा त्रयं ।
चक्रवर्ती स विज्ञेयो वाजी भूपालसंज्ञकः ॥ ९३ ॥
कंठे यस्य महावर्तो एकश्श्रेष्टः प्रजायते ।
चिंतामणिस्स विज्ञेयश्चिंतितार्थसुखप्रदः ॥ ९४ ॥

शुल्काख्यौ फालकंठस्थौ आवर्तौ वृद्धिकीर्तिदौ ॥ ९५ ॥
यस्यावर्तौ वक्त्रगतौ कुक्ष्यंते वाजिनो यदि ।
स नूनं मृत्युमाप्नोति कुर्याद्वा स्वामिनाशनं ॥ ९६ ॥
जानुसंस्था यदावर्ताः प्रवासक्लेशकारकाः ।
वाजिमेढ्रे यदावर्तो विजयश्रीविनाशनः ॥ ९७ ॥
त्रिकसंस्थो यदावर्तस्त्रिवर्गस्य प्रणाशनः ।
पुच्छमूले यदावर्तो धूमकेतुरनर्थकृत् ॥ ९८ ॥
गुह्यपुच्छत्रिकावर्तो स कृतांतो भयप्रदः ॥ ९८ ॥
मध्यदंडा पार्श्वगमा सैव शतपदी कचे ।
अतिदुष्टांगुष्ठमिता दीर्घादुष्टा यथा यथा ॥ ९९ ॥
अश्रुपातहनुगंडहृद्गलप्रोथवास्तिषु ।
कटिशंखजानुमुष्ककुन्नाभिगुदेषु च ।
दक्षकुक्षौ दक्षपादे त्वशुभो भ्रमरस्सदा ॥ १०१ ॥
गलमध्ये पृष्ठमध्ये उत्तरोष्ठेऽधरे तथा ।
कर्णनेत्रांतरे वामकुक्षौ चैव तु पार्श्वयोः ।
ऊरुषु च शुभावर्तौ वाजिनामग्रपादयोः ॥ १०२ ॥
आवर्तौ सान्तरौ फाले सूर्यचंद्रौ शुभप्रदौ ।
मिलितौ तौ मध्यफलौ ह्यतिलग्नौ तु दुष्फलौ ॥ १०३ ॥
आवर्तत्रितयं फाले शुभं चोर्ध्वं तु सांतरं ।
अशुभं चातिसंलग्नमावर्तद्वितयं तथा ॥ १०४ ॥
त्रिकोणत्रितयं फाले आवर्तानां तु दुःखदं ।
गलमध्ये शुभस्त्वेकस्सर्वाशुभनिवारणः ॥ १०५ ॥
अधोमुखश्शुभः पादे फाले चोर्ध्वमुखो भ्रमः ।
न चैवात्यशुभा पृष्ठमुखी शतपदी मता ॥ १०६ ॥

मेढ्रस्य पश्चाद्भ्रमरी स्तनी वाजी स चाशुभः ।
भ्रमः कर्णसमीपे तु शृंगी चैकस्स निंदितः ॥ १०७ ॥
ग्रीवोर्ध्वपार्श्वे भ्रमरी ह्येकरश्मिस्स चैकतः ।
पादोर्ध्वमुखभ्रमरी कीलोत्पाटी स निन्दितः ॥ १०८ ॥
शुभाशुभौ भ्रमौ यस्मिन् स वाजी मध्यमस्स्मृतः ।
मुखे पत्सु सितः पंचकल्याणोऽश्वस्सदा मतः ॥ १०९ ॥
स एव हृदये स्कंधे पुच्छे श्वेतोऽष्टमंगलः ।
कर्णे श्यामश्श्यामकर्णस्सर्वतस्त्वेकवर्णभाक् ॥ ११० ॥
तत्रापि सर्वतश्श्वेतो मेध्यः पूज्यस्सदैव हि ।
वैडूर्यसंनिभे नेत्रे यस्य स्तो जयमंगलः ॥ १११ ॥
मिश्रवर्णस्त्वेकवर्णः पूज्यस्स्यात् सुन्दरो यदि ॥ ११२ ॥
कृष्णपादो हरी निंद्यस्तथा श्वेतैकपादपि ।
रूक्षो धूसरवर्णश्च गर्दभाभोऽपि निन्दितः ॥ ११३ ॥
कृष्णतालुः कृष्णजिह्वः कृष्णोष्ठश्च विनिंदितः ।
सर्वतः कृष्णवर्णो यः पुच्छे श्वेतस्स निन्दितः ॥(११४)॥
उच्चैःपदन्यासगतिर्द्विपव्याघ्रगतिश्च यः ।
मयूरहंसतित्तिरपारावतगतिश्च यः ।
मृगोष्ट्रवानरगतिः पूज्यो वृषगतिर्हयः ॥ ११५ ॥
अतिमुक्तोऽतिपीतोऽपि यया सादी न पीड्यते ।
श्रेष्ठा गतिस्तु सा ज्ञेया स श्रेष्ठस्तुरगो मतः ॥ ११६ ॥
सुश्वेतफालतिलको विद्धो वर्णांतरेण च ।
स वाजी दलभंजी तु यस्य सैवातिनिंदितः ॥ ११७ ॥
संहन्याद्वर्णजान् दोषान् स्निग्धवर्णो भवेद्यदि ॥ ११८ ॥
बलाधिकश्च सुगतिर्महान् सर्वांगसुन्दरः ।

नातिक्रूरस्सदा पूज्यो भ्रमाद्यैरपि दूषितः ॥ ११९ ॥
वाजिनामत्यवहनात् सुदोषास्संभवंति हि ।
कृशो व्याधिपरीतांगो जायतेऽत्यंतवाहनात् ॥ १२० ॥
अवाहितो भवेन्मन्दस्सर्वकर्मसु निन्दितः ।
अपोषितो भवेत् क्षीणो रोगी चात्यंतपोषणात् ॥ १२१ ॥
सुगतिर्दुर्गतिर्नित्यं शिक्षकस्य गुणागुणैः ॥ १२१″॥
जान्वधश्चलपादस्स्यादृजुकायस्स्थिरासनः ।
तुलाधृतखलीनस्स्यात् काले देशे सुशिक्षकः ॥ १२२″॥
मृदुना नातितीक्ष्णेन कशाघातेन ताडयेत् ।
ताडयेन्मध्यघातेन स्थाने स्वश्वं सुशिक्षकः ॥ १२३″॥
हेषिते कक्षयोर्हन्यात् स्खलिते पक्षयोस्तथा ।
भीते कर्णान्तरे चैव ग्रीवासून्मार्गगामिनि ॥(१२४″)॥
कुपिते बाहुमध्ये च भ्रान्तचित्ते तथोदरे ।
अश्वस्संताड्यते प्राज्ञैर्नान्यस्थानेषु कर्हिचित् ॥ १२५″॥
अथवा हेषिते स्कंधे स्खलिते जघनान्तरे ।
भीते वक्षस्स्थलं हन्याद्वक्रमुन्मार्गगामिनि ।
कुपिते पुच्छसंघाते भ्रान्ते जानुद्वयं तथा ॥(१२७)॥
नासकृत् ताडयेदश्वमकाले च विदेशके ।
अकालस्थानघातेन वाजिदोषान् वितन्वते ॥ १२८ ॥
तावद्भवंति ते दोषा यावज्जीवत्यसौ हयः ।
दुष्टं दंडेनाभिभवेन्नारोहेद्दंडवर्जितः ॥ १२९ ॥
गच्छेत् षोडशमात्राभिरुत्तमोऽश्वो धनुश्शतं ।
यथा यथा न्यूनगतिरश्वो हीनस्तथा तथा ॥ १३० ॥
सहस्रचापप्रमितं मंडलं गतिशिक्षणे ।

उत्तमं वाजिनो मध्यं नीचमर्धं तदर्धकं ॥ १३१ ॥
अल्पं शतधनुः प्रोक्तमत्यल्पं च तदर्धकं ॥ १३१ ॥
शतयोजनगंता स्याद्दिनैकेन यथा हयः ।
गतिं संवर्धयेन्नित्यं तथा मंडलविक्रमैः ॥ १३२ ॥
सायं प्रातश्च हेमन्ते शिशिरे कुसुमागमे ।
सायं ग्रीष्मे तु शरदि प्रातरश्वं वहेत् सदा ।
वर्षासु न वहेदीपत्तथा विषमभूमिषु ॥ १३४ ॥
सुगत्याग्निर्बलं दार्ढ्यमारोग्यं वर्धते हरेः ।
भारमार्गपरिश्रान्तं शनैश्चंक्रामयेद्धयं ॥ १३५ ॥
स्नेहं संपाययेत् पश्चाच्छर्करासक्तुमिश्रितं ।
हरिमन्थांश्च माषांश्च भक्षणार्थं मकुष्टकान् ।
शुष्कानार्द्रांश्च मांसानि सुस्विन्नानि प्रदापयेत् ॥ १३६ ॥
यद्यत्र स्खलितं गात्रं तत्र दंडं प्रपातयेत् ॥ १३७ ॥
नावतारितपल्याणं हयं मार्गसमागतं ।
दत्वा गुडं सलवणं बलसंरक्षणाय च ॥(१३८)॥
गतखेदस्य शांतस्य सुरूपमुपातिष्ठतः ।
मुक्तपृष्ठादिबंधस्य खलीनमवतारयेत् ॥ १३९ ॥
मर्दयित्वा तु गात्राणि पांसुमध्ये विवर्तयेत् ।
स्नानपानावनाहैश्च ततस्सम्यक् प्रपोषयेत् ॥ १४० ॥
सर्वदोषहरोऽश्वानां मद्यजांगलयो रसः ।
शक्त्या संपाययेत् क्षीरं घृतं वा वारि सक्तुकं ॥ १४१ ॥
अन्नं भुक्त्वा जलं पीत्वा तत्क्षणाद्वाहितो हयः ।
उत्पद्यंते तदाश्वानां कासश्वासादिका गदाः ॥ १४२ ॥
यवाश्चे चणकाश्श्रेष्ठा मध्या माषा मकुष्टकाः ।

नीचा मसूरा मुद्गाश्च भोजनार्थं तु वाजिनः ॥ १४३ ॥
गतयष्षड्विधा धारास्कंदितं रेचितं प्लुतं ।
धौरीतकं वल्गितं च तासां लक्ष्म पृथक् पृथक् ॥ १४४ ॥
धारागतिस्सा विज्ञेया यातिवेगतरा मता ।
पार्ष्णितोदातिनुदितो यस्यां भ्रांतो भवेद्धयः ॥ १४५ ॥
आकुंचिताग्रपादाभ्यामुत्प्लुत्योत्प्लुत्य या गतिः ।
आस्कंदिता च सा ज्ञेया गतिविद्भिस्तु वाजिनां ॥ १४६ ॥
ईषदुत्प्लुत्य गमनमखंडं रेचितं हि तत् ।
पादैश्चतुर्भिरुत्प्लुत्य मृगवत् सा प्लुता गतिः ॥ १४७ ॥
असंवलितपङ्क्त्यां तु सुव्यक्तं गमनं तुरं ।
धौरीतकं च तज्ज्ञेयं रथसंवाहने वरं ॥ १४८ ॥
प्रसंवलितपङ्क्त्यां यो मयूरो धृतकंधरः ।
दोलायितशरीरार्धकायो गच्छति वल्गितं ॥ १४९ ॥
परिणाहो वृषमुखादुदरे तु चतुर्गुणः ।
सककुत्त्रिगुणोच्चं तु सार्धत्रिगुणदीर्घता ॥ १५० ॥
सप्ततालो वृषः पूज्यो गुणैरेभिर्युतो यदि ।
न स्थायी न च वै मंदस्सुवोढा स्वंगसुंदरः ।
नातिक्रूरस्सुपृष्ठश्च वृषभश्श्रेष्ठ उच्यते ॥ १५१ ॥
त्रिंशद्योजनगंता वा प्रत्यहं भारवाहकः ।
नवतालश्च सुदृढस्सुमुखोष्ट्रः प्रशस्यते ॥ १५२ ॥
शतमायुर्मनुष्याणां गजानां परमं स्मृतं ।
मनुष्यगजयोर्बाल्यं यावद्विंशतिवत्सरं ॥ १५३ ॥
नृणां हि मध्यमं यावत् षष्टिवर्षं वयस्स्मृतं ।
अशीतिवत्सरं यावद्गजस्य मध्यमं वयः ॥ १५४ ॥

चतुस्त्रिंशत्तु वर्षाणामश्वस्यायुः परं स्मृतं ।
पंचविंशतिवर्षं हि परमायुर्वृषोष्ट्रयोः ॥ १५५ ॥
बाल्यमश्ववृषोष्ट्राणां पंचमं वत्सरं मतं ।
मध्यं यावत्षोडशाब्दं वार्धक्यं तु ततः परं ॥ १५६ ॥
दंतानामुद्गमैर्वर्णैरायुर्ज्ञेयं वृषाश्वयोः ॥ १५७ ॥
अश्वस्य षट् सिता दंताः प्रथमाब्दे भवंति हि ।
कृष्णलोहितवर्णास्तु द्वितीयेऽब्दे ह्यधोगताः ॥ १५८ ॥
तृतीयेऽब्दे तु संदंशौ क्रमात् कृष्णौ षडब्दतः ।
तत्पार्श्ववर्तिनौ तौ तु चतुर्थे पुनरुद्गतौ ॥ १५९ ॥
अन्त्यौ द्वौ पंचमाब्दे तु संदंशौ पुनरुद्गतौ ।
मध्यपार्श्वान्तगौ द्वौ द्वौ क्रमात् कृष्णौ षडब्दतः ॥ १६० ॥
नवमाब्दात् क्रमात् पीतौ तौ सितौ द्वादशाब्दतः ।
दशपंचाब्दतस्तौ तु काचाभौ क्रमतस्स्मृतौ ॥ १६१ ॥
अष्टादशाब्दतस्तौ हि मध्वाभौ भवतः क्रमात् ।
शंखाभौ चैकविंशाब्दाच्चतुर्विंशाब्दतस्सदा ॥ १६२ ॥
छिद्रं संचलनं पातो दंतानां च त्रिके त्रिके ॥ १६२ ॥
प्रोथे सुवलयस्तिस्रः पूर्णायुर्यस्य वाजिनः ।
यथा यथा तु हीनास्ता हीनमायुस्तथा तथा ॥ १६३ ॥
जानूत्पाता त्वोष्टवाद्यो धूतपृष्ठो जलासनः ।
गतिमध्यासनः पृष्ठपाती पश्चाद्गमोर्ध्वपान् ॥ १६४ ॥
सर्पजिह्वश्चर्क्षकांतिर्भीरुरश्वोऽतिनिन्दितः ।
सच्छिद्रफालतिलकी निंद्य आश्रयकृत्तथा ॥ १६५ ॥
वृषस्याष्टौ सिता दंताश्चतुर्थेऽब्देऽखिलास्स्मृताः ।
द्वावंत्यौ पतितोत्पन्नौ पंचमेऽब्दे हि तस्य वै ॥ १६६ ॥

षष्ठे तूपांत्यौ भवतस्सप्तमे तत्समीपगौ ।
अष्टमे पतितोत्पन्नौ मध्यमौ दशनौ खलु ॥ १६७॥
कृष्णपीतासितारक्तशंखच्छायौ द्विके द्विके ।
क्रमादब्दे च भवतश्चलनं पतनं ततः ॥ १६८॥
उष्ट्रस्योक्तप्रकारेण वयोज्ञानं तु वा भवेत् ॥ १६९ ॥
प्रेरकाकर्षकमुखोऽङ्कुशो गजविनिग्रहे ।
हस्तिपकैर्गजस्तेन विनेयस्सुगमाय हि ॥ १७० ॥
खलीनस्योर्ध्वखंडौ द्वौ पार्श्वगौ द्वादशांगुलौ ।
तत्पार्श्वांतर्गताभ्यां तु सुदृढाभ्यां तथैव च ॥(१७१)॥
वारकाकर्षखंडाभ्यां रज्ज्वर्थवलयैर्युतौ ।
एवंविधखलीनेन वशीकुर्याच्चु वाजिनं ॥ १७२ ॥
नासिकाकर्षरज्ज्वा तु वृषोष्ट्रं विनयेद्भृशं ।
तीक्ष्णाग्रायस्सप्तफालस्स्यादेषां मलशोधने ॥ १७३ ॥
सुताडनैर्विनेया हि मनुष्याः पशवस्सदा ।
सैनिकास्तु विशेषेण न ते वै धनदंडतः ॥ १७४ ॥
अनूपे तु वृषाश्वानां गजोष्ट्राणां तु जांगले ।
साधारणे पदातीनां निवेशाद्रक्षणं भवेत् ॥ १७५ ॥
शतं शतं योजनांते सैन्यं राष्ट्रे नियोजयेत् ॥ १७५॥
गजोष्ट्रवृषभाश्वाः प्राक् श्रेष्ठास्संभारवाहने ।
सर्वेभ्यश्शकटाश्श्रेष्ठा वर्षाकालं विना स्मृताः ॥ १७६॥
न चाल्पसाधनो गच्छेदपि जेतुमरिं लघुं ।
महतात्यंतसाद्यस्कबलेनैव सुबुद्धियुक् ॥ १७७॥
अशिक्षितमसारं च साद्यस्कं तूलवच्च तत् ।
युद्धं विनान्यकार्येषु योजयेन्मतिमान् सदा ॥ १७८॥

विकर्तुं यततेऽल्पोऽपि प्राप्ते प्राणात्ययेऽनिशं ।
न पुनः किंतु बलवान् विकारकरणक्षमः ॥ १७९ ॥
अपि बहुबलोऽशूरो न स्थातुं क्षमते रणे ।
किमल्पसाधनाशूरस्स्थातुं शक्तोऽरिणा समं ॥ १८० ॥
सुसिद्धाल्पबलश्शूरो विजेतुं क्षमते रिपुं ।
महान् सुसिद्धबलयुक् शूरः किं न विजेष्यति ॥ १८१ ॥
मौलशिक्षितसारेण गच्छेद्राजा रणे रिपुं ।
प्राणात्ययेऽपि मौलं न स्वामिनं त्यक्तुमिच्छति ॥ १८२ ॥
वाग्दंडपरुषेणैव भृतिह्रासेन भीतितः ।
नित्यं प्रवासायासाभ्यां भेदोऽवश्यं प्रजायते ॥ १८३ ॥
बलं यस्य तु संभिन्नं मनागपि जयः कुतः ।
शत्रोस्स्वस्यापि सेनाया अतो भेदं विचिंतयेत् ॥ १८४ ॥
यथा हि शत्रुसेनाया भेदोऽवश्यं भवेत्तथा ।
कौटिल्येन प्रदानेन द्राक् कुर्यान्नृपतिस्सदा ॥ १८५ ॥
सेवयात्यंतप्रबलं नत्या चारिं प्रसाधयेत् ।
प्रबलं मानदानाभ्यां युद्धैर्हीनबलं तथा ।
मैत्र्या जयेत् समबलं भेदैस्सर्वान् वशं नयेत् ॥ १८७ ॥
शत्रुसंसाधनोपायो नान्यस्सुबलभेदतः ॥ १८७ ॥
तावत् परो नीतिमान् स्याद्यावत् सुबलवान् स्वयं ।
मित्रं तावच्च भवति पुष्टाग्नेः पवनो यथा ॥ १८८ ॥
त्यक्तं रिपुबलं धार्यं न समूहसमीपतः ।
पृथङ्नियोजयेत् प्राग्वा युद्धार्थं कल्पयेच्च तत् ।
मैत्र्यमारात् पृष्ठभागे पार्श्वयोर्वा बलं न्यसेत् ॥ १९० ॥
अस्यते क्षिप्यते यत्तु मंत्रयंत्राग्निभिश्च तत् ।

अस्त्रं तदन्यतश्शस्त्रमसिकुंतादिकं च यत् ॥ १९१ ॥
अस्त्रं तु द्विविधं ज्ञेयं नालिकं मांत्रिकं तथा ॥ १९१"॥
यदा तु मांत्रिकं नास्ति नालिकं तत्र धारयेत् ।
सह शस्त्रेण नृपतिर्विजयार्थं तु सर्वदा ॥ १९२"॥
लघुदीर्घाकारधाराभेदैश्शस्त्रास्त्रनामकं ।
प्रथयन्ति नवं भिन्नं व्यवहाराय तद्विदः ॥ १९३"॥
नालिकं द्विविधं ज्ञेयं बृहत्क्षुद्रविभेदतः ॥ १९४ ॥
तिर्यगूर्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकं ।
मूलाग्रयोर्लक्ष्यभेदितिलबिंदुयुतं सदा ॥(१९५)॥
यंत्राघाताग्निकृद्ग्रावचूर्णधृक्कर्णमूलकं ।
सुकाष्ठोपांगबुध्नं च मध्यांगुलबिलांतरं ॥(१९६)॥
स्वांतेऽग्निचूर्णसंधातृ शलाकासंयुतं दृढं ।
लघुनालिकमप्येतत् प्रधार्यं पत्तिसादिभिः ॥ १९७ ॥
यथा यथा तु त्वक्सारं यथा स्थूलबिलांतरं ।
यथा दीर्घं बृहद्गोलं दूरभेदि तथा तथा ॥ १९८ ॥
मूलकीलभ्रमाल्लक्ष्यसमसन्धानभाजि यत् ।
बृहन्नालिकसंज्ञं तत् काष्ठबुध्नविवर्जितं ।
प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदं ॥ १९९" ॥
सुवर्चिलवणात् पंच पलानि गंधकात् पलं ।
अंतर्धूमविपक्वार्कस्नुह्याद्यंगारतः पलं ॥(२००")॥
शुद्धात् संग्राह्य संचूर्ण्य संमील्य प्रपुटेद्रसैः ।
स्नुह्यर्काणां रसोनस्य शोषयेदातपेन च ।
पिष्ट्वा शर्करवच्चैतदग्निचूर्णं भवेत् खलु ॥ २०२ ॥
सुवर्चिलवणाद्भागाण्षड्वा चत्वार एव वा ।

नालास्त्रार्थाग्निचूर्णे तु गंधांगारी तु पूर्ववत् ॥ २०३ ॥
गोलो लोहमयो गर्भगुटिकः केवलोऽपि वा ।
सीसस्य लघुनालार्थे ह्यन्यधातुभवोऽपि वा ॥ २०४ ॥
लोहसारमयं वापि नालास्त्रं त्वन्यधातुजं ।
नित्यसंमार्जनस्वच्छमस्त्रपातिभिरावृतं ॥ २०५ ॥
अंगारस्यैव गंधस्य सुवर्चिलवणस्य च ।
शिलाया हरितालस्य तथा सीसमलस्य च ॥(२०६)॥
हिंगुलस्य तथा कांतरजसः कर्पुरस्य च ।
जतोर्नील्याश्च सरलानिर्यासस्य तथैव च ॥(२०७)॥
समन्यूनाधिकैरंशैरग्निचूर्णान्यनेकशः ।
कल्पयंति च तद्विद्याश्चंद्रिकाभादिमंति च ॥ २०८ ॥
क्षिपंति चाग्निसंयोगाद्गोलं लक्षे सुनालगं ॥ २०८ ॥
नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकं ।
निवेशयेत्तद्दंडेन नालमूले यथा दृढं ॥ २०९ ॥
ततस्सुगोलकं दद्यात् ततः कर्णेऽग्निचूर्णकं ।
कर्णचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत् ॥ २१० ॥
लक्ष्यभेदी यथा बाणो धनुर्ज्याविनियोजितः ।
भवेत् तथा तु संधाय द्विहस्तश्च शिलीमुखः ॥ २११ ॥
अष्टाश्रा पृथुबुध्ना तु गदा हृदयसंमिता ।
पट्टीशस्स्वसमो हस्तबुध्नश्चोभयतोमुखः ॥ २१२ ॥
ईषद्वक्रश्चैकधारो विस्तारे चतुरंगुलः ।
क्षुरप्रान्तो नाभिसमो दृढमुष्टिस्सुचन्द्ररुक् ।
खड्गः प्रासश्चतुर्हस्तदंडबुध्नः क्षुराननः ॥ २१४ ॥
दशहस्तमितः कुंतः फालाग्रश्शंकुबुध्नकः ।

चक्रं षड्हस्तपरिधि क्षुरप्रान्तं सुनाभियुक् ॥ २१५ ॥
त्रिहस्तदंडस्त्रिशिखो लोहरज्जुस्सुपाशकः ॥ २१५ ॥
गोधूमसंमितस्थूलपत्रं लोहमयं दृढं ।
कवचं सशिरस्त्राणमूर्ध्वकायविशोभनं ॥ २१६ ॥
तीक्ष्णाग्रं करजं श्रेष्ठं लोहसारमयं दृढं ॥ २१७ ॥
यो वै सुपुष्टसंभारस्तथा षड्गुणमंत्रवित् ।
वह्वस्त्रसंयुतो राजा योद्धुमिच्छेत् स एव हि ।
अन्यथा दुःखमाप्नोति स्वराज्याद्भ्रश्यतेऽपि च ॥ २१८ ॥
आविभ्रतोश्शत्रुभावमुभयोस्संयतात्मनोः ।
अस्त्राद्यैस्स्वार्थसिद्ध्यर्थं व्यापारो युद्धमुच्यते ॥ २१९ ॥
मंत्रास्त्रैर्दैविकं युद्धं नालाद्यस्त्रैस्तथाऽसुरं ।
शस्त्रवाहुसमुत्थं तु मानवं युद्धमीरितं ॥ २२० ॥
एकस्य वहुभिस्सार्धं वहूनां वहुभिश्च वा ।
एकस्यैकेन वा द्वाभ्यां द्वयोर्वा तद्भवेत् खलु ॥ २२१ ॥
कालं देशं शत्रुवलं दृष्ट्वा स्वीयवलं ततः ।
उपायान् षड्गुणं मंत्रं संभूयाद्युद्धकामुकः ॥ २२२ ॥
शरद्धेमंतशिशिरकालो युद्धेषु चोत्तमः ।
वसंतो मध्यमो ज्ञेयोऽधमो ग्रीष्मस्स्मृतस्सदा ॥ २२३ ॥
वर्षासु न प्रशंसंति युद्धं साम स्मृतं तदा ॥ २२४ ॥
युद्धसंभारसंपन्नो यदाधिकवलो नृपः ।
मनोत्साही सुशकुनोत्पाती कालस्तदा शुभः ॥ २२५ ॥
कार्येऽत्यावश्यके प्राप्ते कालो नो चेद्यदा शुभः ।
विधाय हृदि विश्वेशं गेहे चिह्नमियात्तदा ॥ २२६ ॥
न कालनियमस्तत्र गोस्त्रीविप्रविनाशने ॥ २२६ ॥

यस्मिन् देशे यथाकालं सैन्यव्यायामभूमयः ।
परस्य विपरीताश्च स्मृतो देशस्स उत्तमः ॥ २२७ ॥
आत्मनश्च परेषां च तुल्यव्यायामभूमयः ।
यत्र मध्यम उद्दिष्टो देशश्शास्त्रविचिंतकैः ॥ २२८ ॥
अरातिसैन्यव्यायामसुपर्याप्तमहीतलः ।
आत्मनो विपरीतश्च स वै देशोऽधमस्स्मृतः ॥ २२९ ॥
स्वसैन्यात्तु तृतीयांशहीनं शत्रुबलं यदि ।
अशिक्षितमसारं वा साद्यस्कं स्वजयाय वै ॥ २३० ॥
पुत्रवत् पालितं यत्तु दानमानविवर्द्धितं ।
युद्धसंभारसंपन्नं स्वसैन्यं विजयप्रदं ॥ २३१ ॥
संधिं च विग्रहं यानमासनं च समाश्रयं ।
द्वैधीभावं च संविद्यान्मंत्रस्यैतांस्तु षड्गुणान् ॥ २३२ ॥
याभिः क्रियाभिर्बलवान् मित्रतां याति वै रिपुः ।
सा क्रिया संधिरित्युक्ता विमृशेत् तां तु यत्नतः ॥ २३३ ॥
विकर्षितस्सन् बाधीनो भवेच्छत्रुस्तु येन वै ।
कर्मणा विग्रहस्तं तु चिंतयेन्मन्त्रिभिर्नृपः ॥ २३४ ॥
शत्रुनाशार्थगमनं यानं स्वाभीष्टसिद्धये ।
स्वरक्षणं शत्रुनाशो भवेत् स्थानात् तदासनं ॥ २३५ ॥
यैर्गुप्तो बलवान् भूयाद्दुर्बलोऽपि स आश्रयः ।
द्वैधीभावस्स्वसैन्यानां स्थापनं गुल्मगुल्मतः ॥ २३६ ॥
बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नस्संधिमन्विच्छेत् कुर्वाणः कालयापनं ॥ २३७ ॥
एक एवोपहारस्तु संधिरेष मतो हितः ।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥ २३८ ॥

अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहाराद्दते यस्मात् संधिरन्यो न विद्यते ॥ २३९ ॥
शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत् ।
सेवां वापि च स्वीकुर्याद्दद्यात् कन्यां भुवं धनं ॥ २४० ॥
स्वसामन्तांश्च संधीयान्मन्त्रेणान्यजयाय वै ।
संधिः कार्योऽप्यनार्येण संप्राप्योत्सादयेद्धि सः ॥ २४१ ॥
संघातवान् यथा वेणुर्निविडैः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं वेणुस्संघातवांस्तथा ॥ २४२ ॥
संधिश्चातिबले युद्धं साम्ये यानं तु दुर्बले ।
सुहृद्भिराश्रयस्स्थानं दुर्गादिभजनं द्विधा ॥ २४३ ॥
बलिना सह संधाय भये साधारणे यदि ।
आत्मानं गोपयेत् काले बह्वमित्रेषु बुद्धिमान् ॥ २४४ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनं ।
प्रतिवातं हि न घनः कदाचिदपि सर्पति ॥ २४५ ॥
बलीयसि प्रणमतां काले विक्रमतामपि ।
संपदो न विसर्पंति प्रतीपमिव निम्नगाः ॥ २४६ ॥
राजा न गच्छेद्विश्वासं संधितोऽपि हि बुद्धिमान् ।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ २४७ ॥
आपन्नोऽभ्युदयाकांक्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेत च विग्रहं ॥ २४८ ॥
प्रहीनबलमित्रं तु दुर्गस्थं शत्रुमागतं ।
अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकं ।
भिन्नमन्त्रिबलं राजा पीडयेत् परिवेष्टयन् ॥ २४९ ॥
विग्रहस्स च विज्ञेयो ह्यन्यश्च कलहस्स्मृतः ॥ २५० ॥

बलीयसात्यल्पबलश्शूरेण न च विग्रहं ।
कुर्याच्च विग्रहे पुंसां सर्वनाशः प्रजायते ॥ २५१ ॥
एकार्थाभिनिवेशित्वं कारणं कलहस्य वा ।
उपायांतरनाशे तु ततो विग्रहमाचरेत् ॥ २५२ ॥
विगृह्य संधाय तथा संभूयाथ प्रसंगतः ।
उपेक्षया च निपुणैर्यानं पंचविधं स्मृतं ॥ २५३ ॥
विगृह्य याति हि यदा सर्वाञ्छत्रुगणान् बलात् ।
विगृह्ययानं यानज्ञैस्तदाचार्यैः प्रचक्ष्यते ॥ २५४ ॥
अरिमित्राणि सर्वाणि स्वमित्रैस्सर्वतो बलात् ।
विगृह्य चारिभिर्गंतुं विगृह्यगमनं तु वा ॥ २५५ ॥
संधायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा ।
संधायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ २५६ ॥
एको भूपो यदैकत्र सामंतैस्सांपरायिकैः ।
शक्तिशौर्ययुतैर्यानं संभूयगमनं हि तत् ॥ २५७ ॥
अन्यत्र प्रस्थितस्संगादन्यत्रैव च गच्छति ।
प्रसंगयानं तत् प्रोक्तं यानविद्भिश्च मंत्रिभिः ॥ २५८ ॥
रिपुं यातस्य बलिनस्संप्राप्य विकृतं फलं ।
उपेक्ष्य तस्मिन् तद्यानमुपेक्षायानमुच्यते ॥ २५९ ॥
दुर्वृत्तेऽप्यकुलीने तु बलं दातारि रज्यते ।
हृष्टं कृत्वा स्वीयबलं पारितोष्यप्रदानतः ॥ २६० ॥
नायकः पुरतो यायात् प्रवीरपुरुषावृतः ।
मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनं ।
ध्वजिनीं च सदोद्युक्तस्स गोपायेद्दिवानिशं ॥ २६१ ॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।

सेनापतिस्तत्र तत्र गच्छेद्व्यूहकृतैर्बलैः ॥ २६३ ॥
यायाद्व्यूहेन महता मकरेण पुरोभये ।
श्येनेनोभयपक्षेण सूच्या वा धीरवक्त्रया ॥ २६४ ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञिकं ।
सर्वतस्सर्वतोभद्रं चक्रं व्यालमथापि वा ।
यथादेशं कल्पयेद्वा शत्रुसेनाविभेदकं ॥ २६५ ॥
व्यूहरचनसंकेतान् वाद्यभाषासमीरितान् ।
स्वसैनिकैर्विना कोऽपि न जानाति तथाविधान् ।
नियोजयेच्च मतिमान् व्यूहान् नानाविधान् सदा ॥ २६७ ॥
अश्वानां च गजानां च पदातीनां पृथक् पृथक् ।
उच्चैस्संश्रावयेद्व्यूहसंकेतान् सैनिकान् नृपः ॥(२६८)॥
वामदक्षिणसंस्थो वा मध्यस्थो वाग्रसंस्थितः ।
श्रुत्वा तान् सैनिकैः कार्यमनुशिष्टं यथा तथा ॥ २६९ ॥
संमीलनं प्रसरणं परिभ्रमणमेव च ।
आकुंचनं तथा यानं प्रयाणमपयानकं ॥(२७०)॥
पर्यायेण च सांमुख्यं समुत्थानं च लुण्ठनं ।
संस्थानं चाष्टदलवच्चक्रवद्गोलतुल्यकं ॥(२७१)॥
सूचीतुल्यं शकटवदर्धचंद्रसमं तु वा ।
पृथग्भवनमल्पाल्पैः पर्यायैः पंक्तिवेशनं ॥(२७२)॥
शस्त्रास्त्रयोर्धारणं च संधानं लक्ष्यभेदनं ।
मोक्षणं च तथास्त्राणां शस्त्राणां परिघातनं ॥(२७३)॥
द्राक् संधानं पुनः पातो ग्रहो मोक्षः पुनः पुनः ।
स्वगूहनं प्रतीघातश्शस्त्रास्त्रपदविक्रमैः ॥(२७४)॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा पंक्तितो गमनं ततः ।

तथा प्राग्भवनं चापसरणं तूपसर्जनं ॥ २७५ ॥
अपसृत्यास्त्रसिद्ध्यर्थमुपसृत्य विमोक्षणे ।
प्राग्भूत्वा मोचयेदस्त्रं व्यूहस्थस्सैनिकस्सदा ॥ २७६ ॥
आसीनस्स्याद्विमुक्तास्त्रः प्राग्वा चापसरेत् पुनः ।
प्रागासीनं तूपसृतो दृष्ट्वा स्वास्त्रं विमोचयेत् ।
एकैकशो द्विशो वापि संघशो बोधितो यथा ॥ २७७ ॥
क्रौञ्चानां खे गतिर्यादृक् पंक्तितस्संप्रजायते ।
तादृक् संचारयेत् क्रौञ्चव्यूहं देशबलं यथा ॥ २७८ ॥
सूक्ष्मग्रीवं मध्यपुच्छं स्थूलपक्षं तु पंक्तितः ।
बृहत्पक्षं मध्यगलपुच्छं श्येनं मुखे तनु ॥ २७९ ॥
चतुष्पान्मकरो दीर्घस्थूलवक्त्रद्विरोष्ठकः ।
सूची सूक्ष्ममुखो दीर्घसमदण्डांतरंध्रयुक् ॥ २८० ॥
चक्रव्यूहश्चैकमार्गो ह्यष्टधा कुंडलीकृतः ।
चतुर्दिक्ष्वष्टपरिधिस्सर्वतोभद्रसंज्ञकः ॥ २८१ ॥
अमार्गश्चाष्टवलयी गोलकस्सर्वतोमुखः ।
शकटश्शकटाकारो व्यालो व्यालाकृतिस्सदा ॥(२८२)॥
सैन्यमल्पं बृहद्वापि दृष्ट्वा मार्गं रणस्थलं ।
व्यूहैर्व्यूहेन व्यूहाभ्यां संकरेणापि कल्पयेत् ॥ २८३ ॥
यन्त्रास्त्रैश्शत्रुसेनाया भेदो येभ्यः प्रजायते ।
स्थलेभ्यस्तेषु संतिष्ठेत् ससैन्यो ह्यासनं हि तत् ॥ २८४ ॥
तृणान्नजलसम्भारा ये चान्ये शत्रुपोषकाः ।
सम्यङ्निरुध्य तान् यत्नात् परितश्चिरमासनात् ॥(२८५)॥
विच्छिन्नविविधासारं प्रक्षीणयवसेन्धनं ।
विगृह्यमाणप्रकृतिं कालेनैव वशं नयेत् ॥ २८६ ॥

अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
संधाय यदवस्थानं संधायासनमुच्यते ॥ २८७ ॥
उच्छिद्यमानो बलिना निरुपायप्रातिक्रियः ।
कुलोद्भवं सत्यमार्यमाश्रयेत बलोत्कटं ॥ २८८ ॥
विजिगीषोस्तु साह्यार्थास्सुहृत्सम्बन्धिबांधवाः ।
प्रदत्तभृतिका ह्यन्ये भूपा अंशप्रकल्पिताः ॥ २८९ ॥
सैवाश्रयस्तु कथितो दुर्गाणि च महात्मभिः ॥ २९० ॥
अनिश्चितोपायकार्यस्समयानुचरो नृपः ।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितं ।
प्रदर्शयेदन्यकार्यमन्यमालम्बयेच्च वा ॥ २९१ ॥
सदुपायैश्च सन्मन्त्रैः कार्यसिद्धिरथोद्यमैः ।
भवेदल्पजनस्यापि किं पुनर्नृपतेर्न हि ॥ २९२ ॥
उद्योगेनैव सिध्यंति कार्याणि न मनोरथैः ।
न हि सुप्तमृगेन्द्रस्य निपतन्ति गजा मुखे ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥ २९४ ॥
लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकं ।
उपायोपगृहीतेन तेनैतत् परिशोष्यते ॥ २९५ ॥
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनां ।
उपायेषूत्तमो भेदष्षड्गुणेषु समाश्रयः ॥ २९६ ॥
कार्यौ द्वौ सर्वदा तौ तु नृपेण विजिगीषुणा ।
ताभ्यां विना नैव कुर्याद्युद्धं राजा कदाचन ॥ २९७ ॥
परस्परं प्रातिकूल्यं रिपुसेनपमंत्रिणां ।
भवेद्यथा तथा कुर्यात् तत्प्रजायाश्च तत्स्त्रियाः ॥ २९८ ॥
उपायान् षड्गुणान् वीक्ष्य शत्रोस्स्वस्यापि सर्वदा ।

युद्धं प्राणात्यये कुर्यात् सर्वस्वहरणे सति ॥ २९९ ॥
स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः ।
प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः ॥ ३०० ॥
युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशं ॥ ३०० ॥
समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्तेत सङ्ग्रामात् क्षत्रधर्ममनुस्मरन् ॥ ३०१ ॥
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनं ।
भूमिरेतौ निर्गिलति सर्पो बिलशयानिव ॥ ३०२ ॥
ब्राह्मणस्यापि चापत्तौ क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंभवं ।
अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ॥ ३०४ ॥
विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ।
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत् कर्म प्रशंसंति पुराविदः ॥ ३०५ ॥
न गृहे मरणं शस्तं क्षत्रियाणां विना रणात् ।
शौण्डीराणामशौण्डीरमधर्मं कृपणं हि तत् ॥ ३०६ ॥
रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः ।
शस्त्रास्त्रैस्सुविनिर्भिन्नः क्षत्रियो वधमर्हति ॥ ३०७ ॥
आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यांत्यपराङ्मुखाः ॥ ३०८ ॥
भर्तुरर्थे च यश्शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न विनिवर्तेत तस्य स्वर्गो ह्यनन्तकः ॥ ३०९ ॥
आहवे निहतं शूरं न शोचेत कदाचन ।
निर्मुक्तस्सर्वपापेभ्यः पूतो याति सलोकतां ॥ ३१० ॥

वराप्सरस्सहस्राणि शूरमायोधने हतं ।
त्वरमाणाः प्रधावंति मम भर्ता भवेदिति ॥ ३११॥
मुनिभिर्दीर्घतपसा प्राप्यते यत् पदं महत् ।
युद्धाभिमुखनिहतैश्शूरैस्तद्द्रागवाप्यते ॥ ३१२॥
एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वार आश्रमास्तस्य यो युद्धे न पलायते ॥ ३१३॥
न हि शौर्यात् परं किंचित् त्रिषु लोकेषु विद्यते ।
शूरस्सर्वं पालयति शूरे सर्वं प्रतिष्ठितं ॥ ३१४॥
चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥ ३१५॥
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तो यो रणे चाभिमुखं हतः ॥ ३१६॥
आत्मानं गोपयेच्छक्तो वधेनाप्याततायिनः ।
सुविद्यब्राह्मणगुरोर्युद्धे श्रुतिनिदर्शनात् ॥ ३१७॥
आचार्या वै कारुणिकाः प्राज्ञाश्चापापदर्शिनः ।
नैते महाभये प्राप्ते संप्रष्टव्याः कथंचन ॥ ३१८॥
प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ॥ ३१९॥
बहून्याश्चर्यरूपाणि कुर्वाणा जनसंसदि ।
इज्यास्त्रे चोपसंधाने पंडितास्तत्र शोभनाः ॥ ३२०॥
परेषां विवरज्ञाने मनुष्यचरितेषु च ।
हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि ॥(३२१)॥
गोधनेषु प्रतोलीषु स्वयंवरमुखेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ ३२२॥

पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।
अरेश्चित्तगुणान् ज्ञात्वा न सैन्ये भङ्गशंकया ।
विधीयतां तथा नीतिर्यथा वध्यो भवेत् परः ॥ ३२४ ॥
आततायित्वमापन्नो ब्राह्मणश्शूद्रवत् स्मृतः ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ ३२५ ॥
उद्यम्य शस्त्रमायांतं भ्रूणमप्याततायिनं ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥ ३२६ ॥
उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायिनं ।
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ॥ ३२७ ॥
अपसरति यो युद्धाज्जीवितार्थी नराधमः ।
जीवन्नेव मृतस्सोऽपि भुंक्ते राष्ट्रकृतं त्वघं ॥ ३२८ ॥
मित्रं वा स्वामिनं त्यक्त्वा निर्गच्छति रणाच्च यः ।
सोऽन्ते नरकमायाति सजीवो निंद्यतेऽखिलैः ॥ ३२९ ॥
मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः ।
अकीर्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥ ३३० ॥
विस्रंभाच्छरणं प्राप्तं यस्संत्यजति दुर्मतिः ।
स याति नरके घोरे यावदिन्द्राश्चतुर्दश ॥ ३३१ ॥
सुदुर्वृत्तं यदा क्षत्रं नाशयेयुस्तु ब्राह्मणाः ।
युद्धं कृत्वापि शस्त्रास्त्रैर्न तदा पापभागिनः ॥ ३३२ ॥
हीनं यदा क्षत्रकुलं नीचैर्लोकः प्रपीड्यते ।
तदापि ब्राह्मणा युद्धे नाशयेयुस्तु तान् द्रुतं ॥ ३३३ ॥
उत्तमं मांत्रिकास्त्रेण नालिकास्त्रेण मध्यमं ।
शस्त्रैः कनिष्ठं युद्धं तु बाहुयुद्धं ततोऽधमं ॥ ३३४ ॥

मन्त्रेरितमहाशक्तिबाणाद्यैश्शत्रुनाशनं ।
मांत्रिकास्त्रेण तद्युद्धं सर्वयुद्धोत्तमं स्मृतं ॥ ३३५॥
नालाग्निचूर्णसंयोगाल्लक्षे गोलनिपातनं ।
नालिकास्त्रेण तद्युद्धं महाह्रासकरं रिपोः ॥ ३३६॥
कुंतादिशस्त्रसंघातैर्नाशनं रिपुणां च यत् ।
शस्त्रयुद्धं तु तज्ज्ञेयं नालास्त्राभावतस्सदा ॥ ३३७॥
कर्षणैस्संधिमर्माणां प्रतिलोमानुलोमतः ।
बंधनैर्घातनं शत्रोर्युक्त्या तद्बाहुयुद्धकं ॥ ३३८॥
वामपाणिकचोत्पीडा भूमौ निष्पेषणं बलात् ।
मूर्ध्नि पादप्रहरणं जानुनोदरपीडनं ॥(३३९)॥
मालूराकारया मुष्ट्या कपोले दृढताडनं ।
कफोनिपातोऽप्यसकृत् सर्वतस्तलताडनं ।
जालेन युद्धे भ्रमणं नियुद्धं स्मृतमष्टधा ॥(३४१)॥
चतुर्भिः क्षात्रियं हन्यात् पञ्चभिः क्षात्रियाधमं ।
षड्भिर्वैश्यं सप्तभिस्तु शूद्रं संकरमष्टभिः ।
शत्रुष्वेतानि युंजीत न मित्रेषु कदाचन ॥ ३४२॥
नालास्त्राणि पुरस्कृत्य लघूनि च महांति च ।
तत्पृष्ठगांश्च पादातान् गजाश्वान् पार्श्वयोस्स्थितान् ।
कृत्वा युद्धं प्रारभेत भिन्नामात्यबलारिणा ॥ ३४४॥
सांमुख्येन प्रपातेन पार्श्वाभ्यामपयानतः ।
युद्धानुकूलभूमेस्तु यावल्लाभस्तथाविधं ॥(३४५)॥
सैन्यार्धांशेन प्रथमं सेनपैर्युद्धमीरितं ।
अमात्यगोपितैः पश्चादमात्यैस्सह तद्भवेत् ।
नृपसङ्गोपितैः पश्चात् स्वतः प्राणात्यये च तत् ॥ ३४६॥

दीर्घाध्वनि परिश्रांतं क्षुत्पिपासाहितश्रमं ।
व्याधिदुर्भिक्षकरकैः पीडितं दस्युविद्रुतं ॥(३४७)॥
पंकपांसुजलस्कंधव्यस्तं श्वासातुरं तथा ।
प्रसुप्तं भोजने व्यग्रमभूमिष्टमसंस्थितं ॥(३४८)॥
घोराग्निभयवित्रस्तं वृष्टिवातसमाहतं ।
एवमादिषु जातेषु व्यसनैश्च समाकुलं ।
स्वसैन्यं साधु रक्षेत्तु परसैन्यं विनाशयेत् ॥ ३५० ॥
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥ ३५१ ॥
भिन्ना हि सेना नृपतेर्दुःस्संदेहा भवत्युत ।
मौला हि पुरुषव्याघ्र किमु नाना समुत्थिता ॥ ३५२ ॥
उपायान् षड्गुणं मन्त्रं शत्रोस्स्वस्यापि चिंतयेत् ।
धर्मयुद्धैः कूटयुद्धैर्हन्यादेव रिपुं सदा ॥ ३५३ ॥
याने सपादभृत्या तु स्वभृत्यान् वर्धयन्नृपः ।
स्वदेहं गोपयन् युद्धे चर्मणा कवचेन च ॥(३५४)॥
पाययित्वा मदं सम्यक् सैनिकान् शौर्यवर्धनं ।
उत्तोजितांश्च निर्द्वंधान् मन्त्रान् युद्धे नियोजयेत् ॥ ३५५ ॥
नालिकास्त्रेण खड्गाद्यैस्सैनिकैः पातयेदरीन् ।
कुंतेन सादी बाणेन रथगो गजगोऽपि च ॥ ३५६ ॥
गजो गजेन यातव्यस्तुरगेण तुरङ्गमः ।
रथेन च रथो योज्यः पत्तिना पत्तिरेव च ।
एकेनैकश्च शस्त्रेण शस्त्रमस्त्रेण वास्त्रकं ॥ ३५७ ॥
न च हन्यात् स्थलारूढं न क्लीबं न कृतांजलिं ।
न मुक्तकेशमासीनं न तवास्मीति वादिनं ॥ ३५८ ॥

न सुप्तं न विसन्नाहं न नग्नं न निरायुधं ।
न युध्यमानं पश्यन्तं युध्यमानं परेण च ॥ ३५९ ॥
पिबंतं न च भुंजानमन्यकार्याकुलं न च ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥ ३६० ॥
वृद्धो बालो न हन्तव्यो नैव स्त्री केवलो नृपः ।
यथायोग्यं तु संयोज्य निघ्नन् धर्मो न हीयते ॥ ३६१ ॥
धर्मयुद्धे तु कूटे वै न संति नियमा अमी ।
न युद्धं कूटसदृशं नाशनं बलवद्रिपोः ॥ ३६२ ॥
रामकृष्णेन्द्रादिदेवैः कूटमेवादृतं पुरा ।
कूटेन निहतो बालिर्यवनो नमुचिस्तथा ॥ ३६३ ॥
प्रफुल्लवदनेनैव तथा कोमलया गिरा ।
अङ्गीकृतापराधेन सेवादाननतिस्तवैः ।
उपकारैस्स्वाशयेन दिव्यैर्विश्वासयेत् परं ॥ ३६५ ॥
क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत् ॥ ३६५ ॥
अवमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यं साधयेत् प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ ३६६ ॥
मन्वासीनश्शतानिकस्सेनाकार्यं विचिंतयन् ।
सदैव व्यूहसंकेतवाद्यशब्दांतवर्तिनः ।
संचरेयुस्सैनिकाश्च राजराष्ट्रहितैषिणः ॥ ३६८ ॥
भेदितां शत्रुणा दृष्ट्वा स्वसेनां घातयेच्च तां ॥ ३६८ ॥
प्रत्यग्रे कर्मणि कृते योधैर्दद्याद्धनं च तान् ।
पारितोष्यन्वाधिकारं क्रमतोऽर्हं नृपस्सदा ॥ ३६९ ॥
जलान्नतृणसंरोधैश्शत्रून् संपीड्य यत्नतः ।
पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् ॥ ३७० ॥

कूटस्वर्णमहादानैर्भेदयित्वा द्विपद्बलं ।
नित्यविस्त्रंभसंसुप्तं प्रजागरकृतश्रमं ॥(३७१)॥
विलोम्यापि परानीकमप्रमत्तो विनाशयेत् ।
तत्सहायबलं नैव व्यसनाप्तमपि क्वचित् ॥ ३७२ ॥
स्वसमीपतरं राज्यं नान्यस्माद्ग्राहयेत् क्वचित् ।
क्षणं युद्धाय सज्जेत क्षणं चापसरेत् पुनः ।
अकस्मान्निपतेद्दूराद्दस्युवत् परितस्सदा ॥ ३७४ ॥
रूप्यं हेम च कुप्यं च यो यज्जयति तस्य तत् ।
दद्यात् कार्यानुरूपं च हृष्टो योधान् प्रहर्षयन् ॥ ३७५ ॥
विजित्य च रिपूनेवं समादद्यात् करं तथा ।
राज्यांशं वा सर्वराज्यं नन्दयीत ततः प्रजाः ॥ ३७६ ॥
तूर्यमङ्गलघोषेण स्वकीयं पुरमाविशेत् ।
तत्प्रजाः पुत्रवत् सर्वाः पालयीतात्मसात्कृताः ॥ ३७७ ॥
नियोजयेन्मन्त्रिगणमपरं मन्त्रचिन्तने ।
देशे काले च पात्रे च ह्यादिमध्यावसानतः ।
भवेन्मंत्रफलं कीदृगुपायेन कथं त्विति ॥(३७८)॥
मंत्रचाद्यधिकृतः कार्यं युवराजाय बोधयेत् ।
पश्चाद्राज्ञे तु तैस्साकं युवराजो निवेदयेत् ॥ ३७९ ॥
राजा संशासयेदादौ युवराजं ततस्तु सः ।
युवराजो मंत्रिगणान् राजाग्रे तेऽधिकारिणः ॥ ३८० ॥
सदसत् कर्म राजानं बोधयेद्धि पुरोहितः ॥ ३८१ ॥
ग्रामाद्बहिस्समीपे तु सैनिकान् धारयेत् सदा ।
ग्राम्यसैनिकयोर्न स्यादुत्तमर्णाधमर्णता ॥ ३८२ ॥
सैनिकार्थं तु पण्यानि सैन्ये संधारयेत् पृथक् ।

नैकत्र वासयेत् सैन्यं वत्सरं तु कदाचन ॥ ३८३ ॥
सेनासहस्रं सज्जं स्यात् क्षणात् संशासयेत् तथा ।
संशासयेत् स्वनियमान् सैनिकानष्टमे दिने ॥ ३८४ ॥
चंडत्वमाततायित्वं राजकार्ये विलंबनं ।
अनिष्टोपेक्षणं राज्ञस्स्वधर्मपरिवर्जनं ॥(३८५)॥
त्यजंतु सैनिका नित्यं सल्लापमपि वा परैः ।
नृपाज्ञया विना ग्रामं न विशेयुः कदाचन ॥(३८६)॥
स्वाधिकारिगणस्यापि ह्यपराधं दिशंतु नः ।
मित्रभावेन वर्तध्वं स्वामिकृत्ये सदाखिलैः ॥(३८७)॥
सूज्ज्वलानि च रक्षन्तु शस्त्रास्त्रवसनानि च ।
अन्नं जलं प्रस्थमात्रं पात्रं बह्वन्नसाधकं ॥ ३८८ ॥
शासनादन्यथाचारान् विनेष्यामि यमालयं ।
भेदायिता रिपुधनं गृहीत्वा दर्शयंतु मां ॥ ३८९ ॥
सैनिकैरभ्यसेन्नित्यं व्यूहाद्यनुकृतिं नृपः ।
तथायनेऽयने लक्ष्यमस्त्रपातैर्विभेदयेत् ॥ ३९० ॥
सायं प्रातस्सैनिकानां कुर्यात् सङ्गणनं नृपः ।
जात्याकृतिवयोदेशग्रामवासान् विमृश्य च ॥ ३९१ ॥
कालं भृत्यवधिं देयं दत्तं भृत्यस्य लेखयेत् ।
कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकं ।
तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकं ॥ ३९२ ॥
सैनिकाश्शिक्षिता ये ये तेषु पूर्णा भृतिस्स्मृता ।
व्यूहाभ्यासे नियुक्ता ये तेष्वर्धा भृतिमावहेत् ॥ ३९३ ॥
असत्कर्त्राश्रितं सैन्यं नाशयेच्छत्रुयोगतः ॥ ३९४ ॥
नृपस्यासद्गुणरताः के गुणद्वेषिणो नराः ।

असद्गुणोदासीनाः के हन्यात् तान् विमृशन् नृपः ।
सुखासक्तांस्त्यजेद्भृत्यान् गुणिनोऽपि नृपस्सदा ॥ ३९५ ॥
सुखांतलोकविश्वस्ता योज्यास्त्वंतःपुरादिषु ।
धार्यास्सुखांतविश्वस्ता धनादिव्ययकर्मणि ॥ ३९६ ॥
तथा हि लोकविश्वस्तो बाह्यकृत्ये नियुज्यते ।
अन्यथा योजितास्ते तु परिवादाय केवलं ॥ ३९७ ॥
शत्रुसंबंधिनो ये ये भिन्ना मंत्रिगणादयः ।
नृपदुर्गुणतो नित्यं हृतमाना गणाधिकाः ।
स्वकार्यसाधका ये तु सुभृत्या पोषयेच्च तान् ॥ ३९९ ॥
लोभेनासेवनाद्भिन्नास्तेष्वर्धां भृतिमावहेत् ।
शत्रुत्यक्तान् सुगुणिनस्सुभृत्या पालयेन्नृपः ॥ ४०० ॥
परराष्ट्रे हृते दद्याद्भृतिं भिन्नावधि तथा ।
दद्यादर्धां तस्य पुत्रे स्त्रियै पादमितां किल ॥ ४०१ ॥
हृतराज्यस्य पुत्रादौ सद्गुणे पादसंमितं ।
दद्याद्वा तद्राज्यतस्तु द्वात्रिंशांशं प्रकल्पयेत् ॥ ४०२ ॥
हृतराज्यस्य निचितं कोशं भोगार्थमाहरेत् ॥ ४०२ ॥
कौसीदं वा तद्धनस्य पूर्वोक्तार्धं प्रकल्पयेत् ।
तद्धनं द्विगुणं यावन्न तदूर्ध्वं कदाचन ॥ ४०३ ॥
स्वमहत्त्वद्योतनार्थं हृतराज्यान् प्रधारयेत् ।
प्राङ्मानैर्यदि सद्वृत्तान् दुर्वृत्तांस्तु प्रपीडयेत् ॥ ४०४ ॥
अष्टधा दशधा वापि कुर्याद्द्वादशधापि वा ।
यामिकार्थमहोरात्रं यामिकान् वीक्ष्य नान्यथा ॥ ४०५ ॥
आदौ प्रकल्पितानंशान् भजेयुर्यामिकास्तथा ।
आद्यः पुनस्त्वंतिमांशं स्वपूर्वांशं ततोऽपरे ॥ ४०६ ॥

पुनर्वा योजयेत्तद्वदाद्येऽस्यं चांतिमे ततः ।
स्वपूर्वांशं द्वितीयेऽह्नि द्वितीयादिक्रमागतं ॥ ४०७ ॥
चतुर्भ्यस्त्वधिकान् नित्यं यामिकान् योजयेद्दिने ।
युगपद्योजयेद्दृष्ट्वा बहून् वा कार्यगौरवं ॥ ४०८ ॥
चतुरूनान् यामिकांस्तु कदा नैव नियोजयेत् ॥ ४०९ ॥
यद्रक्ष्यमुपदेक्ष्यं यदादेश्यं यामिकाय तत् ।
तत्समक्षं हि सर्वं स्याद्यामिकोऽपि च तत्तथा ॥(४१०)॥
कीलकोष्ठे तु स्वर्णादि रक्षेन्नियमितावधि ।
स्वांशांते दर्शयेदन्ययामिकं तु यथार्थकं ॥ ४११ ॥
क्षणे क्षणे यामिकानां कार्यं दूरात् सुबोधनं ॥ ४११ ॥
सत्कृतान् नियमान् सर्वान् यदा संपालयेन्नृपः ।
तदैव नृपतिः पूज्यो भवेत् सर्वेषु नान्यथा ॥ ४१२ ॥
यस्यास्ति नियतं कर्म नियतस्सद्ग्रहो यदि ।
नियतोऽसद्ग्रहत्यागो नृपत्वं सोऽश्नुते चिरं ॥ ४१३ ॥
यस्यानियमितं कर्म साधुत्वं वचनं त्वपि ।
सदैव कुटिलस्सण्ढुस्स्वपदाद्राग्विनश्यति ॥ ४१४ ॥
नापि व्याघ्रगजाश्शक्ता मृगेन्द्रं शासितुं यथा ।
न तथा मंत्रिणस्सर्वे नृपं स्वच्छंदगामिनं ॥ ४१५ ॥
निभृताधिकृतास्तेन निस्सारत्वं हि तेष्वतः ।
गजो निबध्यते नैव तूलभारसहस्रकैः ॥ ४१६ ॥
उद्धर्तुं द्राग्गजश्शक्तः पंकलग्नं गजं बली ।
नीतिभ्रष्टनृपं त्वन्यनृप उद्धरणक्षमः ॥ ४१७ ॥
बलवन्नृपभृत्येऽल्पेऽपि श्रीस्तेजो यथा भवेत् ।
न तथा हीननृपतौ तन्मन्त्रिष्वपि नो तथा ॥ ४१८ ॥

वहूनामैकमत्यं हि नृपतेर्वलवत्तरं ।
वहुसूत्रकृतो रज्जुस्सिंहाद्याकर्षणक्षमः ॥ ४१९ ॥
हीनराज्यो रिपुभृत्यो न सैन्यं धारयेद्वहु ।
कोशवृद्धिं सदा कुर्यात् स्वपुत्राद्यभिवृद्धये ॥ ४२० ॥
क्षुधया निद्रया सर्वमशनं शयनं शुभं ।
भवेद्यथा तथा कुर्यादन्यथाशु दरिद्रकृत् ॥ ४२१ ॥
दिशानया व्ययं कुर्यान्नृपो नित्यं न चान्यथा ॥ ४२२ ॥
धर्मनीतिविहीना ये दुर्वला अपि वै नृपाः ।
सुधर्मवलयुग्राज्ञा दंड्यास्ते चौरवत् सदा ॥ ४२३ ॥
सर्वधर्मावनान्नीचनृपोऽपि श्रेष्ठतामियात् ।
उत्तमोऽपि नृपो धर्मनाशनान्नीचतामियात् ॥ ४२४ ॥
धर्माधर्मप्रवृत्तौ तु नृप एव हि कारणं ।
स हि श्रेष्ठतमो लोके नृपत्वं यस्समाप्नुयात् ॥ ४२५ ॥
मन्वाद्यैरादृतो योऽर्थस्तदर्थो भार्गवेण वै ।
द्वाविंशतिशतं श्लोका नीतिसारे प्रकीर्तिताः ॥ ४२६ ॥
शुक्रोक्तनीतिसारं यश्चिन्तयेदनिशं सदा ।
व्यवहारधुरं वोढुं स शक्तो नृपतिर्भवेत् ॥ ४२७ ॥
न कवेस्सदृशा नीतिस्त्रिषु लोकेषु विद्यते ।
काव्यैव नीतिरन्या तु कुनीतिर्व्यवहारिणां ॥ ४२८ ॥
नाश्रयंति च ये नीतिं मन्दभाग्यास्तु ते नृपाः ।
कातर्याद्धनलोभाद्वा स्युर्वै नरकभाजनाः ॥ ४२९ ॥

---

इति शुक्रनीतौ चतुर्थेऽध्याये सेनानिरूपणं नाम सप्तमं प्रकरणं
चतुर्थोऽध्यायश्च समाप्तः

## पंचमोऽध्यायः

नीतिशेषं खिले वक्ष्ये ह्यखिलं शास्त्रसंमतं ।
सम्राज्ञानां तु राज्यस्य हितं सर्वजनेषु वै ॥ १ ॥
शतसंवत्सरांतेऽपि करिष्याम्यात्मसाद्रिपुं ।
इति संचिन्त्य मनसा रिपोश्छिद्राणि लक्षयेत् ॥ २ ॥
राष्ट्रभृत्यविशंकी स्याद्धीनमन्त्रबलो रिपुः ।
युक्त्या तथा प्रकुर्वीत सुमंत्रबलयुक् स्वयं ॥ ३ ॥
सेवया वा वणिग्वृत्त्या रिपुराष्ट्रं विमृश्य च ।
दत्ताभयं सावधानो व्यसनासक्तचेतसं ।
मार्जारलुब्धबकवत् संतिष्ठन् नाशयेदरिं ॥ ४ ॥
सेनां युद्धे नियुंजीत प्रत्यनीकविनाशिनीं ।
न युंज्याद्रिपुराष्ट्रस्थां मिथस्स्वद्वेषिणीं न च ॥ ५ ॥
न नाशयेत् स्वसेनां तु सहसा युद्धकामुकः ।
दानमानैर्वियुक्तोऽपि न भृत्यो भूपतिं त्यजेत् ॥ ६ ॥
समये शत्रुसान्नैव गच्छेज्जीवधनाशया ।
मेघोदकैस्तु या पुष्टिस्सा किं नद्यादिवारितः ॥ ७ ॥
प्रजापुष्टिर्नृपद्रव्यैस्तथा किं धनिनां धनात् ॥ ८ ॥
दर्शयन् मार्दवं नित्यं महावीर्यबलोऽपि च ।
रिपुराष्ट्रे प्रविश्यादौ तत्कार्ये साधको भवेत् ॥ ९ ॥
संजातबद्धमूलस्तु तद्राज्यमखिलं हरेत् ।
अथ तद्द्विष्टदायादान् सेनपानंशदानतः ।
तद्राज्यस्य वशीकुर्यान्मूलमुन्मूलयन् बलात् ॥ १० ॥

तरोस्संक्षीणमूलस्य शाखाश्शुष्यन्ति वै यथा ।
सद्यः केचिच्च कालेन सेनपाद्याः पतिं विना ॥ ११ ॥
राज्यवृक्षस्य नृपतिर्मूलं स्कंधाश्च मंत्रिणः ।
शाखास्सेनाधिपास्सेनाः पल्लवाः कुसुमानि च ।
प्रजाः फलानि भूभागा बीजं भूमिः प्रकल्पिता ॥ १३ ॥
विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।
नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥ १४ ॥
स्ववेषरूपसदृशान् निकटे रक्षयेत् सदा ।
विशिष्टचिह्नगुप्तस्स्यात् समयेऽन्यादृशो भवेत् ॥ १५ ॥
वेश्याभिश्च नटैर्मद्यैर्गायकैर्मोहयेदरीं ॥ १५ ॥
सुवस्त्राभरणैर्नैव न कुटुंबेन संयुतः ।
विशिष्टचिह्नितो भीतो युद्धे गच्छेन्न वै क्वचित् ॥ १६ ॥
क्षणं नासावधानस्स्याद्भृत्यस्त्रीपुत्रशत्रुषु ।
जीवन् सन् स्वामिता पुत्रे नदेयाप्यखिला क्वचित् ॥ १७ ॥
स्वभावसद्गुणे यस्मान्महानर्थप्रदावहा ।
विष्ण्वाद्यैरपि नो दत्ता स्वपुत्रे स्वाधिकारता ॥ १८ ॥
स्वायुषस्स्वल्पशेषे तु सत्पुत्रे स्वाम्यमादिशेत् ।
नाराजकं क्षणमपि राष्ट्रं धर्तुं क्षमाः किल ।
युवराजादयस्स्वाम्यलोभचापलगौरवात् ॥ २० ॥
प्राप्योत्तमं पदं पुत्रस्सुनीत्या पालयन् प्रजाः ।
पूर्वामात्येषु पितृवद्गौरवं संप्रधारयेत् ॥ २१ ॥
तस्यापि शासनं तैस्तु प्रधार्यं पूर्वतोऽधिकं ।
युक्तं चेदन्यथा कार्यं निषेध्यं काललंबनैः ॥ २२ ॥
तदनीत्या न वर्तेयुस्तेन साकं धनाशया ।

वर्तंति यदनीत्या ते तेन साकं पतंत्यरात् ॥ २३ ॥
कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनं ।
स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते ॥ २४ ॥
गुणी सुनीतिर्नव्योऽपि परिपाल्यस्तु पूर्ववत् ।
प्राचीनैस्सह तं कार्ये ह्यनुभूय नियोजयेत् ॥ २५ ॥
अतिमृदुस्तुतिनतिसेवादानप्रियोक्तिभिः ।
मायिकैस्सेव्यते यावत् कार्यं नित्यं तु साधुभिः ॥(२६)॥
प्रत्यक्षं वा परोक्षं वा सत्यवाग्भिर्नृपोऽपि च ।
याथार्थ्यतस्तयोरिद्वगंतरं खभुवोर्यथा ॥ २७ ॥
मायाया जनका धूर्ता जारचोरवहुश्रुताः ।
प्रतिष्ठितो यथा धूर्तो न तथा तु वहुश्रुताः ॥ २८ ॥
परस्वहरणे लोके जारचोरौ तु निन्दितौ ।
तावप्रत्यक्षं हरतः प्रत्यक्षं धूर्त एव हि ॥ २९ ॥
हितं त्वहितवच्चान्ते अहितं हितवत् सदा ।
धूर्तास्संदर्शयित्वाङ्गं स्वकार्यं साधयन्ति ते ॥ ३० ॥
विस्रंभयित्वा चात्यर्थं मायया घातयंति ते ।
यस्य चाप्रियमन्विच्छेत् तस्य कुर्यात् सदा प्रियं ॥ ३१ ॥
व्याधो मृगवधं कर्तुं गीतं गायति सुस्वरं ।
मायां विना महाद्रव्यं द्राङ्न संपाद्यते जनैः ॥ ३२ ॥
विना परस्वहरणान्न कश्चित् स्यान्महाधनः ।
मायया तु विना तद्धि न साध्यं स्याद्यथेप्सितं ॥ ३३ ॥
स्वधर्मं परमं मत्वा परस्वहरणं नृपाः ।
परस्परं महायुद्धं कृत्वा प्राणांस्त्यजंत्यपि ॥ ३४ ॥
राज्ञो यदि न पापं स्याद्दस्यूनामपि नो भवेत् ।

सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः ॥ ३५ ॥
बहुभिर्यस्स्तुतो धर्मो निंदितोऽधर्म एव सः ।
धर्मतत्त्वं हि गहनं ज्ञातुं केनापि नोचितं ॥ ३६ ॥
अतिदानतपस्सत्ययोगो दारिद्र्यकृत् त्विह ।
धर्मार्थौ यत्र न स्यातां तद्वाक् कामं निरर्थकं ॥ ३७ ॥
अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।
निस्संशयो नरः पूज्यो नेष्टस्संशयिता सदा ॥ ३८ ॥
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ।
अर्थाद्धर्मश्च कामश्च मोक्षश्चापि भवेन्नृणां ॥ ३९ ॥
शस्त्रास्त्राभ्यां विना शौर्यं गार्हस्थ्यं तु स्त्रियं विना ।
ऐकमत्यं विना युद्धं कौशल्यं ग्राहकं विना ।
दुःखाय जायते नित्यं सुसहायं विना विपत् ॥ ४० ॥
न विद्यते तु विपदि सुसहायं सुहृत्समं ॥ ४१ ॥
अविभक्तधनान् मैत्र्या भृत्या भक्तधनान् सदा ।
मित्रं स्वसदृशैर्भोगैस्सत्यैश्च परितोषयेत् ॥ ४२ ॥
नृपसंबंधिस्त्रीपुत्रसुहृद्भृत्यादिदस्युभिः ।
अतो विभागं दत्वैषां भुंक्ते यस्तु स्वकं धनं ॥(४३)॥
त्यक्त्वा तु दर्पकार्पण्यमानोद्वेगभयानि च ।
कुर्वीत नृपतिर्नित्यं स्वार्थसिद्ध्यै तु नान्यथा ।
विशेषभृतिनो भृत्यं प्रेममानाधिकारतः ॥ ४४ ॥
ब्राह्मणाग्निजलैस्सर्वैर्धनवान् भक्ष्यते सदा ।
स सुखी मोदते नित्यमन्यथा दुःखमश्नुते ॥ ४५ ॥
दर्पस्तु परह्रासेच्छा मानोऽहं सर्वतोऽधिकः ।

कार्पण्यन्तु व्यये दैन्यं भयं स्वोच्छेदशंकनं ।
मानसस्यानवस्थानमुद्वेगः परिकीर्तितः ॥ ८७ ॥
लघोरप्यपमानस्तु महावैराय जायते ।
दानमानसत्यशौर्यमार्दवं सुसुहृत्करं ॥ ८८ ॥
सर्वानापदि सदसि समाहूय बुधान् गुरून् ।
भ्रातॄन् वंधूंश्च भृत्यांश्च ज्ञातीन् सभ्यान् पृथक् पृथक् ।
यथार्हं पूज्य विनतस्स्वाभीष्टं याचयेन्नृपः ॥ ९० ॥
आपदं प्रतरिष्यामो यूयं युक्त्या वदिष्यथ ।
भवंतो मम मित्राणि भवत्सु नास्ति भृत्यता ॥ ९१ ॥
न भवत्सदृशास्त्वन्ये साहायास्संति मे ह्यतः ।
तृतीयांशं भृतेर्ग्राह्यमर्धं वा भोजनार्थकं ।
दास्याम्यापत्समुत्तीर्णश्शेषं प्रत्युपकारवित् ॥ ९२ ॥
भृतिं विना स्वामिकार्यं भृत्यः कुर्यात् समाष्टकं ।
षोडशाब्दधनी यस्स्यादितरोऽर्थानुरूपतः ॥ ९३ ॥
निर्धनैरन्नवस्त्रं तु नृपाद्ग्राह्यं न चान्यथा ।
यतो भुक्तं सुखं सम्यक् तद्दुःखैर्दुःखितो न चेत् ।
विनिंदति कृतघ्नं तु स्वामी भृत्योऽन्य एव वा ॥ ९५ ॥
सकृत् सुभुक्तं यस्यापि तदर्थं जीवितं त्यजेत् ।
भृत्यस्स एव सुश्लोको नापत्तौ स्वामिनं त्यजेत् ॥ ९६ ॥
स्वामी स एव विज्ञेयो भृत्यार्थे जीवितं त्यजेत् ॥ ९६ ॥
न रामसदृशो राजा पृथिव्यां नीतिमानभूत् ।
सुभृत्यता तु यन्नीत्या वानरैरपि स्वीकृता ॥ ९७ ॥
अपि राष्ट्रविनाशाय चोराणामेकचित्तता ।
शक्ता भवेन्न किं शत्रुनाशाय नृपभृत्ययोः ॥ ९८ ॥

न कूटनीतिरभवच्छ्रीकृष्णसदृशो नृपः ।
अर्जुनाद्ग्राहिता स्वस्य सुभद्रा भगिनी छलात् ॥ ५९ ॥
नीतिमतां तु सा युक्तिर्या हि स्वश्रेयसेऽखिला ॥ ६० ॥
आदौ तद्धितकृत्स्नेहं कार्यं स्नेहमनन्तरं ।
कृत्वा सधर्मवादं च मध्यस्थस्साधयेद्धितं ॥ ६१ ॥
परस्परं भवेत् प्रीतिस्तथा तद्गुणवर्णनं ।
इष्टान्नधनवसनैर्लोभनं कार्यसिद्धिदं ॥ ६२ ॥
दिव्यावलम्बनं मिथ्यासल्लापं धैर्यवर्धनं ।
इमे उपाया मध्यस्थकुट्टिनीकारिणां मताः ॥ ६३ ॥
नात्मसङ्गोपने युक्तिं चिंतयेत् स पशोर्जडः ।
जारसङ्गोपने छद्म संश्रयंति स्त्रियोऽपि च ॥ ६४ ॥
युक्तिश्छलात्मिका प्रायस्तथान्या योजनात्मिका ।
यश्छद्मचारी भवति तेन छद्म समाचरेत् ॥ ६५ ॥
अन्यथा शीलनाशाय महतामपि जायते ।
अस्ति बुद्धिमतां श्रेणिर्न त्वेको बुद्धिमानतः ॥ ६६ ॥
देशे काले च पुरुषे नीतिं युक्तिमनेकधा ।
कल्पयंति च तद्विद्या दृष्ट्वा रुद्धां तु मारुतं ॥ ६७ ॥
मंत्रौषधिपृथग्वेषकालवागर्थसंश्रयात् ।
छद्म संजनयन्तीह तद्विद्याकुशला जनाः ॥ ६८ ॥
लोकेऽधिकारिमत्यक्तं विक्रीतं दत्तमेव वा ।
वस्त्रभांडादिकं क्रीतं स्वचिह्नैरंकयेच्चिरं ॥ ६९ ॥
स्तेनकूटनिरुत्यर्थं राजज्ञातं समाचरेत् ।
जडांधबालद्रव्याणां दद्याद्वृद्धिं नृपस्तदा ॥ ७० ॥
स्वीया तथा च सामान्या परकीया तु स्त्री यथा ।

त्रिविधो भृतकस्तद्वदुत्तमो मध्यमोऽधमः ॥ ७१ ॥
स्वामिन्येवानुरक्तो यो भृतकस्तूत्तमस्स्मृतः ।
सेवते पुष्टभृतिदं प्रकरं स च मध्यमः ।
पुष्टोऽपि स्वामिना व्यक्तं भजतेऽन्यं स चाधमः ॥ ७२ ॥
उपकरोत्यपकृतो ह्युत्तमोऽप्यन्यथाधमः ।
मध्यमस्साम्यमन्विच्छेदपरस्स्वार्थतत्परः ॥ ७३ ॥
नोपदेशं विना सम्यक् प्रमाणैर्ज्ञायतेऽखिलं ।
बाल्यं वाप्यथ तारुण्यं प्रारंभितसमाप्तिदं ॥ ७४ ॥
प्रायो बुद्धिमतो ज्ञेयं न वार्धक्यं कदाचन ।
आरम्भं तस्य कुर्याद्धि यत् समाप्ति सुखं व्रजेत् ॥ ७५ ॥
नारंभो बहुकार्याणामेकदैव सुखावहः ।
नारंभितसमाप्ति तु विना चान्यं समाचरेत् ॥ ७६ ॥
संपाद्यते न पूर्वं हि नापरं लभ्यते यतः ।
कृती तत् कुरुते नित्यं यत् समाप्ति व्रजेत् सुखं ॥ ७७ ॥
यदि सिद्ध्यति येनार्थः कलहेन वरस्तु सः ।
अन्यथायुर्धनसुहृद्यशोधर्महरस्सदा ॥ ७८ ॥
ईर्ष्या लोभो मदः प्रीतिः क्रोधो भीतिश्च साहसं ।
प्रवृत्तिच्छिद्रहेतूनि कार्ये सप्त बुधा जगुः ॥ ७९ ॥
यथाच्छिद्रं भवेत् कार्यं तथैव हि समाचरेत् ।
अविसंवादि विद्वद्भिः कालेऽतीतेऽपि चापदि ॥ ८० ॥
दशग्रामी शतानीकः परिचारकसंयुतौ ।
अश्वस्थौ विचरेयातां ग्रामपा ह्यपि चाश्वगाः ॥ ८१ ॥
साहस्रिकश्शतग्रामी एकाश्वरथवाहनौ ।
दशशस्त्रास्त्रिभिर्युक्तौ गच्छेतां वाश्वसंगतौ ॥ ८२ ॥

सहस्रग्रामपो नित्यं नराश्वद्वयश्वयानगः ।
आयुतिको विंशतिभिस्सेवकैर्हस्तिना व्रजेत् ॥ ८३ ॥
अयुतग्रामपस्सर्वयानैश्च चतुरश्वगः ।
पंचायुती सेनपोऽपि संचरेद्बहुसेवकः ॥ ८४ ॥
यथाधिकाधिपत्यं तु वीक्ष्याधिक्यं प्रकल्पयेत् ।
कल्पयेच्च यथाधिक्यं धनिकेषु गुणिष्वपि ॥ ८५ ॥
श्रेष्ठो न मानहीनस्स्यान्न्यूनो मानाधिकोऽपि न ।
राष्ट्रे नित्यं प्रकुर्वीत श्रेयोऽर्थी नृपतिस्तथा ॥ ८६ ॥
हीनमध्योत्तमानां तु ग्रामे भूमिं प्रकल्पयेत् ।
कुटुंबिनां गृहार्थं तु पत्तनेऽपि नृपस्सदा ॥ ८७ ॥
द्वात्रिंशत्प्रमितैर्हस्तैर्दीर्घोर्वी विस्तृताधमे ।
उत्तमा द्विगुणा मध्या सार्धमाना यथार्हतः ।
कुटुंबसंस्थितिसमा न न्यूना वाधिकापि न ॥ ८९ ॥
ग्रामाद्बहिर्वसेयुस्ते ये ये त्वधिकृता नृपैः ।
नृपकार्यं विना कश्चिन्न ग्रामं सैनिको विशेत् ॥ ९० ॥
तथा न पीडयेत् कुत्र कदापि ग्रामवासिनः ।
सैनिकैर्न व्यवहरेन्नित्यं ग्राम्यजनोऽपि च ॥ ९१ ॥
श्रावयेत् सैनिकान् नित्यं धर्मं शौर्यविवर्द्धनं ।
सुवाद्यनृत्यगीतानि शौर्यवृद्धिकराण्यपि ॥ ९२ ॥
युद्धक्रियां विना सैन्यं योजयेन्नान्यकर्मणि ॥ ९२ ॥
सत्याचारास्तु धनिका व्यवहारे हता यदि ।
राजा समुद्धरेत्तांस्तु तथान्यांश्च कृषीवलान् ॥ ९३ ॥
ये सैन्यधनिकास्तेभ्यो यथार्हां भृतिमावहेत् ।
पारदेश्यं च त्रिंशांशमधिकं नवृनव्ययात् ॥ ९४ ॥

धनं संरक्षयेत्तेषां यत्नतस्स्वात्मकोशवत् ।
संहरेद्धनिकात् सर्वं मिथ्याचाराद्धनं नृपः ॥ ९५ ॥
यदा चतुर्गुणा वृद्धिर्गृहीता धनिकेन च ।
अधमर्णान्न दातव्यं धनिने तु धनं तदा ॥ ९६ ॥

---

इति शुक्रनीतौ खिलनीतिनिरूपणं नाम
पञ्चमोऽध्यायः

---

शुक्रनीतिस्समाप्ता

---

# APPENDICES.

## I.

## VARIÆ LECTIONES.

The numbers 1, 2, 3, 4, 5, and 6 refer to the MSS. and the printed copy used for the compilation of this edition.

### I BOOK.

| Page | Line | |
|---|---|---|
| 1 | 4 | 4 has नीतिशास्त्रं instead of नीतिसारं |
| 2 | 17 | 3, 4 and 6 read देहावधिनश्वरत्वं. |
| ,, | 37 | 1 and 2 read भिन्नामात्यादिका गणाः |
| 3 | 42 | 3 and 4 read इष्टानिष्टाधिकन्यूनाचारस्तु. |
| ,, | 44 | omitted in 3 and 4. |
| ,, | 51 | भूत्वा stands for भवेत् in all copies; the latter has been substituted by me. |
| ,, | 51 | after line 51 follow in 5 the following 4 ślokas:— |

यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा विन्देत नान्यथा ॥
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव कल्पते ॥
दण्डनीतिस्स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति ॥
दण्डनीत्या यदा राजा सम्यक् कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालश्श्रेष्ठः प्रवर्तते ॥

,, 58 1, 2, 3, 5 and 6 read सो नृपः instead of यं नृपः

Page Line

4 68 instead of भवितान्ते 4 reads भजत्यत्र, and 5 भजत्यन्ते

„ 78 4 and 5 read ब्राह्मं

„ 86 5 reads संज्ञकाः

5 92 after line 92 follow in 5 the following 4 ślokas:—

न सुविद्या तपो दानं मन्त्रशिल्पं पराक्रमः ।
उपायस्त्वौषधं युक्तिर्विना दैवेन सिध्यति ॥
य एव हेतुर्भूत्वा तु पुरुषस्याथ सिद्धिषु ।
विनाशेपि स एवास्य संदिग्धं कर्म पौरुषं ॥
येन पथ्यादिना लाभो विनाशस्तेन एव हि ।
सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितं ॥
कृतं मानुषकं कर्म दैवेनोपनिहन्यते ।
दैवमेव प्रधानं हि केचित् प्राहुर्बुधा इति ॥

„ 93 in 4 निश्चयः

„ 94 not in 4; after 94 follows in 5 this śloka:—

शीतमुष्णं तथा वर्षाः क्षुत्पिपासादिकं च यत् ।
दैवमप्यथवात्रैव पौरुषेण निहन्यते ॥

„ 95–96 not in 3 and 4.

„ 97–102 not in 4.

„ 108 6 reads यावद्बुद्धिबलोदयं.

6 119 in 1 सदसत्कर्मणस्स्मृतः.

„ 125 in 1 and 2 अङ्गानि.

„ 130 in 1, 2 and 5 विप्लवेते; in 4 विभवन्ति.

„ 132 in 2 पृथिव्या नैववश्या भवेत्.

| Page | Line |
|---|---|
| 6 | 135 in 1 and 2 धर्माद्वियवनो ; in 3, 4, 5, -पवनो : in 6 -परनो. This line occurs also in the Kāmandakīya I, 14. No. 1571 an old Grantha MS. copy of the Kāmandakīya deposited in the Madras Government Oriental MSS. Library, reads in this line धर्माद्विजवनो, and the commentary attached to it says that king *Vaijavana*, a descendant of Sagara, turned from the unholy ways of his predecessors, and reigned piously for a long time. |
| 7 | 142 in 1 and 4 शाश्वतः |
| ,, | 153 in 1 and 2 वंवुर्वैश्रवणोपमः |
| ,, | 154 in 1, 2, 3, 4 and 5 तु नान्यथा |
| ,, | 156 in 1 and 2 रक्षति ह्यपराधानं |
| ,, | 157 in 1 and 2 शिष्टस्य |
| 8 | 162 in 3 and 4 कथञ्चन |
| ,, | 165 in 1 तितिक्षया |
| ,, | 169 in 1, 2, 3, 4 and 5 वृद्धसेवी दीर्घदर्शी |
| ,, | 170 in 1 and 2 गुणी ; in 5 गुणैर्जुष्टस्तु |
| ,, | 171 in 4 नरकभाजनं |
| ,, | 172 in 1 and 2 तत्सहायगणाः |
| ,, | 174 in 1 and 2 नियतेर्बलात् |
| ,, | 176 in 3 and 4 मर्नाकार्रविना |
| ,, | 178 in 1 and 2 तत्तु |
| ,, | 179 in 1 रञ्जयते ; in 2 रञ्जते |
| ,, | 181 in 1 and 2 नृपस्य |
| 9 | 189 in 1, 2, 3, 4 and 5 गन्यो : in 6 रात्रो |

| Page | Line |
|---|---|
| 9 | 193 in 1 and 2 विप्रमादिनं |
| „ | 198 in 1 and 2 नु विजेष्यति |
| „ | 203 in 2 and 4 शुचिदर्भांकुराहारो |
| „ | 204 in 6 लुब्धकोद्गीतमोहेन |
| „ | 207 in 4 -विलोभित- |
| 10 | 209 in 2 वसता ; in 3 and 6 वसतो |
| „ | 222 in 1 किं |
| „ | 225 in 1 and 2 न्यायपन्थश्च |
| „ | 226 in 6 सदा ह्यतः |
| 11 | 233 in 6 शत्रुनिवर्हणे |
| „ | 240 in 1 and 2 दैवं हन्ति |
| „ | 250 in 1 षण्डनृपाधमाः ; after 250 follows in 5 वृथा षण्डांके तु तिलो रमणीलाभहृद्यथा |
| „ | 252 in 1 and 2 यश्च |
| „ | 253 in 1 and 2 -मल्लयुद्धाल्पजातिषु |
| „ | 254 in 1, 2, 3, 4 and 5 गतः |
| „ | 255 in 1 and 2 वाञ्चकैस्सदा |
| 12 | 259 in 3, 4 and 5 भिद्यतेऽप्यतः |
| „ | 265 in 1, 2, 3 and 6 सुकीर्त्यै |
| „ | 272 in 5 देवा न निन्द्या इति ; in 6 विष्णुमुख्या |
| „ | 274 in 1 and 4 सुभागदण्डस्स्यात् ; after 274 follows in 5 संवेत्तितत्त्वतस्स्वस्य गणदोषौ तु यः पुमान् । निन्दास्तुतिश्रवणतस्स्वस्य नो मोहमेति च ॥ |
| „ | 277 in 1 and 2 अदानेनावमानेन |

| Page | Line | |
|---|---|---|
| 12 | 279 | not in 3, 4 and 6; in 2 अतिभीरुमतिदीर्घसूत्रं; in 5 अतिभीरुमतिक्रुद्धं दीर्घसूत्रं प्रमादिनं |
| ,, | 280 | not in 3, 4 and 6. |
| 13 | 281 | instead of प्रजा in 1 न सः; in 2 च सः; in 3, 4 and 5 च सा |
| ,, | 283 | in 1 and 2 महीभृतां |
| ,, | 287–288 | not in 3. |
| ,, | 293 | 1 and 2 नृभिरादरात् |
| ,, | 298–299 | not in 3 and 4. |
| ,, | 300 | in 1, 2 and 4 प्रतिदानकलाः; in 3, 5 and 6 प्रति-दानकला |
| ,, | 303 | in 5 and 6 आन्वीक्षिकी |
| 14 | 320 | in 1 and 2 तु मन्युना |
| ,, | 323 | in 1 and 2 न चोत्फुल्लोत्पलं; in 3, 5 and 6 -मालीव |
| ,, | 324 | in 4 and 5 सुजनचेष्टितं |
| ,, | 326 | in 1 and 2 सङ्गतिं |
| 15 | 330 | 330 is followed in 5 by सवलावलदुर्वुद्धिपरात्मनाशकस्त्रिधा । परप्रसाधकस्तद्वत्सवुद्धिस्सवलावलः ॥ |
| ,, | 347 | in 1 and 2 सम्भ्रमेण |
| ,, | 348 | in 1 and 2 दाक्षिण्येनेतरान् जनान् |
| 16 | 353 | in 1 and 2 प्राक् |
| ,, | 357 | after 357 in 5 follows:— भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति । भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनं । यस्य भूमिस्तस्य सर्वं जगत् स्थावरजङ्गमं ॥ |

| Page | Line | |
|---|---|---|
| 17 | 380 | in 1, 2 and 4 संज्ञिकाः |
| ,, | 381 | ditto ditto. |
| ,, | 390 | in 5 तत्परिवर्तनं |
| ,, | 391 | in 5 मध्यमामध्यगं पर्वदैर्घ्यं |
| ,, | 400–401 | not in 2; in 3 and 4 line 401 precedes 400. |
| 18 | 405 | in 5 उभयोस्तु |
| ,, | 421 | in 6 निवर्तनं |
| 19 | 431 | in 1, 2 and 4 तटाकादियुतां |
| ,, | 437–440 | not in 3 and 4. |
| ,, | 442 | in 3 शोभनं ; in 4 शोभितं instead of गोपितं |
| ,, | 444–445 | not in 1 and 2. |
| 20 | 461–472 | not in 3 and 4. |
| ,, | 466 | in 1 and 2 मण्टपद्वारे |
| ,, | 471–472 | not in 5. |
| 21 | 482 | in 1, 2, 5 and 6 युद्धसाधनसंभारैः |
| ,, | 490 | in 1, 2, 3, 4 and 5 द्विगुणं |
| 22 | 501 | in 1, 2, 3 and 5 चैताः |
| ,, | 503 | in 1, 2 and 3 अनिवेशनार्थकं |
| ,, | 513 | in 3 and 4 पांथशालास्ततः कार्यास्सुगुप्तास्सुजलाशयाः |
| ,, | 519 | in 1 and 2 नृपैः क्रमात् ; in 4 नृपालयात् |
| 24 | 547 | after 547 in 5 follows:— अजनरद्वपार्श्वोष्ट्रगजेभ्यः क्रमतो हरेत् ।<br>भृतिं पणार्धद्वद्धचातु रक्षार्थं मार्गशालयोः ॥ |
| ,, | 555 | in 1 and 2 चायव्ययः |
| ,, | 558 | in 3 and 4 वितथं |

Page Line

24 559 not in 3 and 4.

,, 560 not in 1 and 2.

26 597 in 1, 2, 3, 5 and 6 मातृणां पितृणां

,, 602 in 6 हीनाङ्ग

27 626 in 1, 2, 3, 4 and 6 धारयीत

,, 631 not in 3, 4, 5 and 6.

28 643 in 1 and 2 रथाश्वगजयानं

29 666 in 4 प्रवर्द्धयेत्; and in 6 लक्ष्यसन्धानमेव च

,, 684 in 1 and 4 राज्ञ:

30 690 not in 3, 4, 5 and 6.

,, 705 in 1, 2, 3, 4 and 5; 706 precedes 705.

,, 710 in 1, 2, 3, 4 and 5 पार्श्वपृष्ठगा:

32 737 in 5 अयुतक्रोशजां; after 737 follows in 5

सन्द्रष्टुं प्रागता दूतास्ते न वध्याः कदाच न ।
दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः ॥

33 765 in 5 after 765 follows :—

कुले जातस्य शूरस्य परवित्तेषु गृध्यतः ।
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च ॥
ऐश्वर्याद्भ्रंशितस्यैव हृतराज्यस्य नित्यदा ।
हृदयं न स्फुटेत् कस्य कोपं कस्य न दीपयेत् ॥

,, 769–774 not in 3 and 4.

II BOOK.

34 15 in 1 and 2 कुलशीलगुणैर्वृद्धान्

35 21 in 1 and 2 दर्पोद्धताद्यास्तु

,, 40 in 1, 2, 3 and 5 किंतु

36 45 in 1, 2, 3, 4 and 5 अंजसा

| Page | Line | |
|---|---|---|
| 37 | 74, 75 | not in 3, 4 and 6. |
| ,, | 79 | in 1 and 2 पितुस्तयोर्वली |
| ,, | 86 | in 1 and 2 कायवाग्दण्डमानसैः. |
| 38 | 99 | not in 1 and 2. |
| ,, | 100–102 | not in 1. |
| 39 | 133 | in 3 and 4 गूढाश्च |
| ,, | 137 | not in 6. |
| ,, | 138 | in 5 follows after 138 |

नीचो विवर्द्धितो राज्ञा राज्यनाशाय सो भवेत् ।
वीर्याधिको नीचकुली दुस्सङ्गेन समेधितः ॥
महाजनैस्स्पर्धमानो हन्ति राष्ट्रं सराजकं ।
मर्कटो मदिरोन्मत्तो भूतवृश्चिकधर्षितः ॥
एकैकमप्यनर्थाय किमेकत्र चतुष्टयं ।
सदर्थवदनर्थं तु सदर्थं त्वप्यनर्थवत् ॥
कृत्वा स्वबुद्धिमाहात्म्यान्महान्तमपि निन्द्यते ।
वञ्चयित्वान्यसर्वस्वं विश्वासेनाहरत्यलं ॥
स नीचस्तद्गुणान् वक्तुं ब्रह्मापि खलु कातरः ।
कपेस्तदपि कापेयं यदर्कमुपतिष्ठते ॥
तथा दुर्जनसन्मानस्तद्वद्बालसुभाषितं ।

| | | |
|---|---|---|
| 41 | 164 | in 1, 2; 3 and 6 कोशो |
| ,, | 175 | in 4 उच्यते |
| ,, | 186 | in 1, 2, 3, 4 and 6 अस्त्रपातीनां |
| 43 | 228 | in 1 and 2 कार्येऽन्ये |
| 45 | 266 | in 1, 2, 3 and 5 समापतन्तशस्त्रास्त्र; in 4 प्रभापतङ्ग |
| 47 | 320–321 | not in 1 and 2 |

Page Line

48 347 in 5 after 347 पंक्तितुल्यमीपद्दीर्घं सुव्यक्तं श्रेष्ठमक्षरं ।

,, 348 in 5 after 348

सुवृत्तदीर्घसंबन्धवर्णाकारनिलेखने ।

तदभ्यासात् प्रतिदिनं लेखकास्सिद्धिमेति च ।

अतस्तु सर्वविद्यानां लेखनाभ्यसनं हितं ॥

49 357 in 5 पठने पाठने

,, 368 in 1 and 2 साध्यासाध्ये

,, 370 in 1, 2, 3 and 6 श्रुतिस्मृतीतरं

50 386–387 not in 3 and 4.

,, 387 in 1 and 2 सुस्थितदर्शिनी

,, 396 in 4 कारिणः

51 416 in 1 and 2 प्रबोधयेत्

52 442 in 1 and 2 वर्जयन्

53 472 in 1 and 2 रागोपरागौ

54 473–489 not in 1, 2, 3, 4 and 6.

57 566–581 not in 3 and 4.

58 570 in 1 and 2 अवमानास्पदं तत्तु; in 5 अपमानास्पदं तत्तु

60 630 in 5 संप्रतिसंज्ञिकं

61 651 in 1, 2, 3 and 4 स्मृतं

62 668 in 1 and 2 भूमिभारसमुद्भूत

,, 671 in 1, 2 and 5 आटकोपायनादिजः

,, 674 in 4 ओदनः instead of संयुतः

,, 676 in 1, 2, 3 and 5 विनिमयीकृतः

65 747 in 3 and 4 आगतः

| Page | Line | |
|---|---|---|
| 66 | 773 | in 3 and 4 तल्लेख्यं |
| 68 | 817 | in 1 and 2 ह्युत्सवादौ ; in 3, 5 and 6 ह्युत्सवाहैः |
| 69 | 834–835 | not in 3 and 4. |
| ,, | 840–841 | not in 1, 2, 3, 4 and 6. |

III BOOK.

| | | |
|---|---|---|
| 71 | 16–19 | not in 1, 2, 3, 4 and 6. |
| 72 | 28 | in 1 and 2 प्रकाशयन् |
| 75 | 98 | in 4 परिवेदना |
| ,, | 100 | in 1 and 2 परिवेदना |
| 77 | 156–158 | not in 1, 2, 3, 4 and 6. |
| 78 | 174 | in 5 प्राप्तोपदेशं |
| ,, | 176 | not in 1, 2, 3, 4 and 6. |
| ,, | 184 | in 4 नान्यथा |
| 79 | 193 | in 3 स्वविद्या |
| 80 | 215 | in 1, 2, 3, 4 and 5 वृद्धिभीत्या तु |
| ,, | 218 | in 4 वा |
| ,, | 219 | in 3 and 6 दातॄणां |
| ,, | 227 | in 1, 2, 3, 4 and 5 कथंचन |
| ,, | 232–233 | not in 4. |
| ,, | 234–235 | not in 1, 2, 3, 4 and 6. |
| 81 | 236–237 | not in 4. |
| ,, | 238–239 | not in 2 ; in 3, 4 and 5 नियुक्तारं |
| ,, | 240–241 | not in 2. |
| ,, | 255 | in 1, 2, 3, 4 and 5 तस्य किं |
| ,, | 257 | in 1, 2, 3, and 5 दीनाप्यपमृता |
| 82 | 259 | in 1 and 2 दानमानावमानं |

| Page | Line | |
|---|---|---|
| 82 | 269 | in 1 and 2 एकशास्त्रं |
| ,, | 270 | in 1 and 2 महान्यतः |
| ,, | 273 | in 3 and 4 चापि |
| 83 | 287 | in 1 स्वशंकितानां ; in 6 सशंकितानां |
| 84 | 312–313 | not in 3 and 4. |
| ,, | 318 | in 6 सुपीडित : |
| ,, | 320 | in 1 and 2 सुहृत्प्रभुः |
| 85 | 331 | in 5 सपत्नजं |
| ,, | 332–333 | not in 3, 4, 5 and 6. |
| ,, | 341 | after 341 in 5 अन्यपूर्वामन्यभावां स्त्रियं व्यालीमिवत्यजेत् । |
| ,, | 345–349 | not in 3 and 4. |
| ,, | 347 | in 6 शीलं धनवयोरूपं |
| 86 | 360 | not in 4. |
| ,, | 367 | in 1 and 2 कुसीद- |
| ,, | 372–375 | not in 1, 2, 3, 4 and 6. |
| ,, | 377 | in 1, 2, 3, 4 and 5 अपि स्त्री |
| 88 | 408 | not in 3 and 4. |
| 89 | 433–434 | not in 2. |
| ,, | 444 | in 1, 2, 3, 4 and 5 अधिकोऽ |
| ,, | 445–446 | not in 1, 2, 3, 4 and 6. |
| 90 | 458 | in 1 and 2 त्यज्यते |
| ,, | 460–465 | not in 1, 2, 3, 4 and 6. |
| 91 | 481 | not in 6. |
| ,, | 490 | in 1 and 2 निर्गमं |
| 92 | 500 | in 3 and 4 वर्द्धितस्यापि |
| ,, | 519 | in 5 सेवितान्यपि नैवेने मित्राणि : in 6 सन्ति हि |
| 93 | 528–529 | not in 3 and 4. |

| Page | Line | |
|---|---|---|
| 93 | 544 | in 1, 2, 3 and 5 सत्त्वगुणोत्तरं |
| 95 | 589–594 | not in 3 and 4. |
| 96 | 616 | in 1 and 2 स्वविहरं |
| 97 | 621–622 | not in 1, 2, 3, 4 and 6. |
| ,, | 653 | in 3 स्थितं |

IV BOOK—I SECTION.

| | | |
|---|---|---|
| 100 | 25–28 | not in 3 and 4. |
| ,, | 27 | in 1, 2 and 5 नामभाक् |
| ,, | 27–28 | not in 6. |
| ,, | 28–33 | in 1 and 2 these lines follow one another in this manner—28, 31, 32, 29, 30 and 33; while in 3 and 4 their order is thus—31, 32, 23, 24, 29, 30 and 33. |
| ,, | 35–38 | not in 1, 2, 3, 4 and 6. |
| 101 | 43 | in 1 क्रमशोऽमी; in 2 क्रमशो ये; in 6 क्रमशो वा तथा |
| ,, | 44 | in 3 स्वमात्याद्याश्च; in 5 स्वामात्याद्याश्च; in 6 कीर्तिताः |
| ,, | 55 | in 1 and 2 साममनुस्मृतं |
| ,, | 60 | in 5 सुसाधकः |
| 102 | 82 | in 4 करोति |
| 103 | 99–103 | not in 3 and 4. |
| 104 | 115 | in 6 कलौ युगे |
| 105 | 142 | in 4 गौरवलाघवे |
| ,, | 162 | not in 6. |
| 106 | 165 | in 5 कुर्वन् मध्यमो |
| ,, | 166–168 | not in 6. |

| Page | Line | |
|---|---|---|
| 106 | 169 | in 1, 2, 3, 4 and 5 मार्गसंस्करणाधिकं |
| 107 | 195 | in 4 दूपका: |
| ,, | 200 | in 1, 2, 3 and 4 कूटकार्यपि |
| 108 | 217 | in 6 मार्गसंरक्षणे |

IV BOOK—II SECTION.

| | | |
|---|---|---|
| 110 | 13 & 14 | reversed in 3, 4 and 5. |
| ,, | 13 | not in 1 and 2. |
| ,, | 14 | in 1 and 2 न हरेत धनं कचित् |
| ,, | 15-244 | not in 1 and 2. |
| ,, | 15 | in 4 भूतिवलं |
| 111 | 40 | not in 3 and 4. |
| ,, | 46-47 | ditto. |
| 112 | 52 | ditto. |
| ,, | 55 | ditto. |
| 113 | 76 | ditto. |
| ,, | 78 | not in 3, 4 and 6. |
| 114 | 95 | in 3, 4 and 6 पुष्करागो |
| ,, | 98 | in 6 विदु: |
| ,, | 103 | not in 3, 4 and 6. |
| ,, | 118 | in 4 श्रेष्ठं instead of भूरि |
| 115 | 120-121 | not in 3, 4 and 6. |
| ,, | 136-137 | not in 3 and 4. |
| ,, | 139 | in 5 and 6 मूल्यं पञ्चसुवर्णानां राजताशीतिकर्षकं |
| ,, | 142 | in 4 अर्हति instead of ईरितं |
| 116 | 145 | in 3 and 5 गुणहानित: ; in 6 गुणहीनत: |
| ,, | 146-151 | not in 5 and 6. |
| ,, | 152 | in 3 and 4 रत्तित्रगाद्भ्रसोद्धंशाति |

Page Line

116 159 in 6 पुष्करागो

,, 163 in 4 तुल्यं instead of मूल्यं

117 168 in 5 and 6 follows after 168

मुक्ताया रक्तिवर्गस्य प्रतिरक्तौ कला नव
कल्पयेत् पंचभागान् हित्रिंशाद्भिः प्राग्भजेच्च तान् ॥
लब्धं कलासु संयोज्य कलाष्षोडशभिर्भजेत् ।
मूल्यं तल्लब्धतो योज्यं मुक्ताया वा तथागुणं ॥

Compare with these 146–149.

,, 184 not in 3 and 4.

118 203–204 not in 6.

,, 205 not in 3 and 4; after 205 in 5

निष्कं सुवर्णाश्चत्वारः परे स्वर्णशतं विदुः ।

119 215 in 4 क्वचिन्न हि सकृच्छुल्क; in 5 and 6 क्वचिन्नैव

,, 223 not in 3 and 4.

,, 224 not in 4.

,, 225–226 not in 3 and 4.

,, 231–232 ditto.

,, 237–238 ditto.

120 244 in 4 लब्धं यद्द्विगुणं चान्नं न etc.

,, 249–251 not in 3 and 4.

,, 259 ditto.

### IV BOOK—III SECTION.

121 14 not in 3 and 4.

,, 19 after 19 in 5 follows:

अन्यथा राष्ट्रसंक्षोभो जायते नात्र संशयः ।

122 24 in 1 and 2 जातिभेदेन

,, 33 in 1 and 2 दस्युनाशः

,, 38–39 not in 3 and 4.

Page Line

126 121 in 1 and 2 सङ्ग्रहा

,, 134–136 not in 2.

,, 147 in 1, 2, 4 and 6 शल्यमूद्धाहृतौ

127 145 in 6 पाषाणादिभूर्ति धातोस्तद्भस्मकरणे कले

,, 154–161 not in 3, 4, 5 and 6.

128 183 in 1, 2 and 4 कला स्मृता

,, 187 in 1 and 4 तिलमाषादिस्नेहानां ; in 2 तिलादिमांस-स्नेहानां

129 192 in 1 and 2 नानादेशीयधर्माणां

IV BOOK—IV Section.

130 7–8 not in 1, 2, 3, 4 and 6.

,, 10–53 not in 6.

,, 15 in 1, 2, 3 and 5 यन्त्रकार्याणि

131 27 in 4 च

,, 33 in 1, 2, 3 and 4 सा

,, 41 in 2, 3, 4 and 5 अहंकारभूर्नतां

132 55–56 not in 3 and 4.

,, 56 in 6 कार्यकेलिभिः

,, 57–61 not in 1, 2, 3, 4 and 6.

,, 62–65 not in 3 and 4.

133 81 not in 6.

,, 92–94 not in 3 and 4.

134 104–112 not in 1, 2, 3, 4 and 6.

,, 114 in 1 and 2 नियोजयेत्

135 120 in 1, 2, 4 and 5 -शम्याकोऽर्कस्य

,, 122 in 4 कारवह्नि

| Page | Line | |
|---|---|---|
| 135 | 135 | in 4 and 5 सुमण्डपौ |
| ,, | 139 | in 4 संज्ञिकः |
| 136 | 147–158 | not in 1, 2, 3, 4 and 6. |
| ,, | 163 | in 1, 2, 4 and 6 तिष्ठती |
| ,, | 165 | in 4 दैत्यसंहन्त्री ह्यत्युग्रा रूपधृक् सदा |
| 137 | 176–183 | not in 1, 2, 3, 4 and 6. |
| 138 | 190 | in 4 शोभिनी |
| ,, | 195 | not in 3 and 4. |
| ,, | 207 | not in 1, 2, 3, 4 and 6. |
| 139 | 216 | in 1, 2 and 4 संलग्नं यत्र यस्य कृत् |
| ,, | 218–219 | not in 1 and 2. |
| ,, | 222 | in 1 and 2 नासाग्रविस्तृतं |
| ,, | 223–224 | not in 3 and 4. |
| ,, | 223 | in 1 रक्तां वा द्विविधा शुभा ; in 5 and 6 सरला वा द्विधा शुभा |
| ,, | 226 | in 3, 4, 5 and 6 श्लक्ष्णाग्रः किंचिदुन्नतः |
| ,, | 235 | not in 3 and 4. |
| ,, | 237 | in 1, 2, 3, 4 and 6 हृन्मूले |
| 140 | 257 | not in 3 and 4. |
| ,, | 258 | not in 3, 4 and 6; in 1 and 2 प्रकल्पयेत् |
| 141 | 267–270 | not in 3 and 4. |
| ,, | 280–281 | not in 2 and 4. |
| ,, | 283 | in 1 and 2 कक्षमूलानि |
| 142 | 291 | not in 1, 2, 3, 4 and 6. |
| ,, | 300 | not in 1, 2 and 6. |
| ,, | 307–319 | not in 3 and 4. |
| 143 | 311–313 | not in 2. |
| 144 | 341 | in 1, 2, 3 and 4 समस्तकः |

| Page | Line | |
|---|---|---|
| 144 | 350, 351 | not in 3. |
| ,, | 352 | not in 3 and 4. |
| ,, | 356 | in 4 परिधिर्मत: |
| 145 | 365–395 | not in 3 and 4. |
| 146 | 396–399 | not in 1, 2, 3, 4 and 5. |
| ,, | 400–402 | not in 3 and 4. |

IV BOOK—V SECTION.

| | | |
|---|---|---|
| 148 | 8 | in 1 and 2 कार्यसंसिद्धि: |
| ,, | 20 | in 1, 2, 3, 5 and 6 भयावहा |
| 149 | 28 | not in 5. |
| ,, | 39 | in 1 and 2 विक्रीयान्नृपो धर्मं |
| 150 | 46 | in 6 नियोजयेत् |
| 151 | 88 | not in 3 and 4. |
| 152 | 102–105 | not in 3, 4, 5 and 6. |
| 153 | 126 | in 6 धर्माधर्मौ |
| 154 | 152 | in 3 and 4 अयुक्तवस्त्राभरण: |
| ,, | 158, 159 | not in 1 and 2; in 3, 4, 5 and 6 मुक्तकेशाश्च |
| 155 | 182 | in 6 समाश्रयन् |
| ,, | 185 | in 1 and 2 दण्डशास्त्रास्त्र |
| 156 | 208 | in 6 अन्याप्तव्यवहारश्च |
| ,, | 213 | in 1 and 2 यान्निराकारयेत् |
| 157 | 219 | in 1 and 2 वा यथा |
| ,, | 223 | in 1, 2, 3, 4 and 6 अनिवर्त्यं |
| ,, | 225–228 | not in 1, 2, 3, 4 and 6. |
| 158 | 242 | in 1 and 2 मदबलान्वित: |
| ,, | 244 | in 3 and 4 तस्मै प्रबोधयेत् पक्षमग्रे राज्ञा विवादिन: । |

| Page | Line | |
|---|---|---|
| 159 | 274 | in 1, 2 and 6 प्रतिज्ञातं |
| 160 | 295–300 | in 3 and 4 these verses stand in the following order—299, 300, 295, 296, 297 and 298. |
| ,, | 302 | in 1 and 2 चोरवत् |
| 161 | 313 | in 3 and 4 कृतमित्युत्तरं; in 1 and 2 कलयित्वा |
| ,, | 319–323 | follow in 6 after 324, 325. |
| ,, | 325 | in 4 तद्द्रव्यं |
| ,, | 326 | not in 6. |
| 162 | 346–349 | not in 3, 4 and 6. |
| 163 | 363 | in 6 आप्नुते |
| ,, | 367 | in 6 यथा |
| 165 | 426 | in 4 वा वलदर्पितः; in 1, 2 and 6 यद्बलदर्पितः |
| 166 | 432 | in 3, 4, 5 and 6 is the latter half विच्छेदोपरवोज्झितः |
| ,, | 450 | in 3 and 4 भवेत् instead of न चेत् |
| 167 | 457 | in 3 and 4 विनापनयनं |
| ,, | 462 | in 6 वाप्यतः instead of नामतः |
| ,, | 471 | in 3 and 4 देवैर्दिव्यविनिर्णये |
| 168 | 481 | in 1, 2 and 6 निमज्जनं |
| 169 | 513 | in 6 महापापाभिशस्तेषु |
| 170 | 530 | in 5 दिव्यैस्संप्रतिपच्या वा; in 1, 2, 3, 4 and 6 निर्णयोऽष्टविधस्स्मृतः |
| ,, | 539 | not in 3 and 4. |
| ,, | 540 | in 1 and 2 कर्तृस्तथा |
| 171 | 566 | in 1 and 2 श्रेष्ठो |
| ,, | 569, 570 | not in 3 and 4. |
| 172 | 585 | in 4 विस्तृतो |

| Page | Line | |
|---|---|---|
| 173 | 603 | in 1, 2 and 6 कुर्वत:; in 4 शिल्पं कुर्वन्ति चैक्यत: |
| ,, | 605 | not in 3 and 4. |
| ,, | 608 | ditto. |
| ,, | 609 | in 1 and 2 गायकास्तु |
| ,, | 615 | in 1, 2 and 4 यथाविध: |
| 174 | 622 | in 4 and 6 पश्चाद्देयं |
| ,, | 634 | in 4 प्रजा: |
| ,, | 635 | in 4 न ददाति समर्थस्य |
| ,, | 640 | in 4 महीभृता |
| ,, | 643 | in 1, 2, 3 and 4 कर्पत: |
| ,, | 645 | in 1 and 2 भुवि instead of शुचि |
| 175 | 659 | in 6 द्विगुणा त्रिगुणाथवा |
| ,, | 660 | in 4 द्विगुणं |

IV BOOK—VI Section.

| Page | Line | |
|---|---|---|
| 176 | 5 | in 5 वृक्षाद्यै: |
| ,, | 9, 10 | not in 2. |
| ,, | 19 | in 4 चोत्तमोत्तम: |
| 177 | 22 | not in 1. |

IV BOOK—VII Section.

| Page | Line | |
|---|---|---|
| 178 | 1 | in 3 and 4 दुर्गं |
| ,, | 4 | in 1 and 2 मानुपी; in 1, 2, 5 and 6 पूर्वं पूर्वं |
| 179 | 44 | in 1, 2, 5 and 6 बृहन्नालद्वयं तथा |
| 180 | 47 | in 3, 4 and 5 after 47 |

दूरदेशनिपातार्थमश्वसैन्यं हितं स्मृतं ।

| Page | Line | |
|---|---|---|
| 180 | 58 | in 1, 2, 5 and 6 स्थाप्यं व्ययीकुर्यान्न चान्यथा |
| ,, | 59 | not in 1, 2, 5 and 6. |
| 181 | 74 | in 1 and 2 सुमुखाधरमेढ्रस्तु; in 4 मृगसंज्ञकः |
| ,, | 86 | in 1 and 2 यश्चोत्तमो मतः; in 4 the verse ends with मध्यमस्त उदाहृतः |
| ,, | 87, 88 | not in 4. |
| ,, | 89 | not in 3. |
| 182 | 95–148 | not in 1, 2, 3, 4 and 6. |
| 184 | 159–197 | not in 3 and 4. |
| 185 | 179 | in 1, 2 and 6 शिवसंज्ञकः |
| ,, | 180 | in 1 and 2 सहृद्द्वामाश्रितः |
| 186 | 198 | in 4, 5 and 6 कचैः |
| 187 | 219 | in 1 and 2 मुखपादसितः |
| ,, | 227–233 | not in 3 and 4. |
| ,, | 228 | in 1 and 2 कृष्णवर्णस्तु |
| 188 | 239 | not in 3 and 4. |
| 189 | 269 | in 1 and 2 हये |
| ,, | 272 | in 1 and 2 माषान् वा |
| ,, | 277 | in 1 and 2 सुदूरं |
| ,, | 279 | in 1 विवासयेत् |
| ,, | 282 | in 1 and 2 युक्तकं |
| 190 | 286–298 | not in 3, 4 and 5. |
| ,, | 294–298 | in 6 294–298 precede 287–293. |
| ,, | 294 | in 1 and 2 गमनं स्यात् द्रुता गतिः |
| ,, | 302 | in 1, 2, 4 and 6 ह्यङ्गसुन्दरः |
| ,, | 305 | in 4 दशतालश्च |
| 191 | 318–320 | not in 1, 2, 5 and 6. |

| Page | Line | |
|---|---|---|
| 194 | 391 | in 1, 2 and 5 मूलकर्णकं |
| ,, | 403 | in 6 शुद्धार्कानां |
| 195 | 417 | in 1, 2, 4 and 5 लक्ष्ये |
| 196 | 434 | not in 6. |
| ,, | 436 | in 1 and 2 यो वै instead of राजा |
| ,, | 438 | in 1, 2, 3, 5 and 6 शत्रुभावं समापन्नोरुभयोः |
| ,, | 452 | in 1 and 2 गेहान्निष्क्रमणं तथा |
| 197 | 466 | in 6 यांति वैरिणः |
| 198 | 485 | in 1 and 2 शक्यते न |
| ,, | 486, 487 | not in 3, 4, 5 and 6. |
| ,, | 488, 489 | not in 3 and 4. |
| ,, | 498 | in 3, 4 and 6 ह्यन्तरागतं |
| 199 | 523 | in 1 and 2 पुत्राश्च यद्धनं |
| 201 | 559 | in 1, 2 and 5 न तु; in 4 सुखं तु तद् |
| 202 | 583 | in 1 and 2 अन्यमार्गं वदेत् तु वा |
| 203 | 605 | in 6 निर्गिलति भूमिरेतौ |
| ,, | 613 | in 4 and 5 हि यत्; in 1, 2 and 6 च यत् |
| 204 | 633 | in 3 and 4 युक्तश्च |
| ,, | 636–648 | not in 3, 4 and 6. |
| 205 | 653–655 | not in 1, 2, 3, 4 and 6. |
| ,, | 661 | in 1 and 2 सोऽत्र instead of तीव्रां |
| ,, | 667 | in 3, 4, and 6 ध्रुवं; in 1 and 2 तथा ध्रुवं |
| 206 | 672 | in 1 लक्ष्ये |
| ,, | 675 | in 6 रिपूणां |
| ,, | 676–685 | not in 3, 4 and 6. |

| Page | Line | |
|---|---|---|
| 206 | 688 | in 1, 2, 3, 4 and 5 युद्धे स्वानुकूले |
| ,, | 690 | not in 1, 2, 3 and 4. |
| ,, | 691 | in 1, 2 and 6 सेनयोः ; in 4 सैन्यपैः |
| 207 | 701, 702 | not in 3, 4 and 6. |
| ,, | 703, 704 | not in 1, 2, 3, 4 and 6. |
| ,, | 705 | in 1, 2, 3 and 4 चिन्तयं |
| ,, | 710 | not in 1, 2, 3, 4 and 6. |
| ,, | 711 | in 1, 2, 4, 5 and 6 नालास्त्रेण च |
| ,, | 712 | in 1 and 2 रथाश्वगजगोऽपि च ; in 6 कुंतेन सादिं वाणेन रथिनं रथगोऽपि च |
| ,, | 713 | in 1 and 2 योद्धव्यः |
| 208 | 722 | in 1 and 2 वृद्धवालौ न हंतव्यौ |
| ,, | 729–732 | not in 3, 4 and 6. |
| ,, | 735, 736 | ditto. |
| 209 | 745, 746 | not in 3 and 4. |
| ,, | 751 | in 6 विजित्यैव |
| 210 | 769–778 | not in 3 and 4. |
| ,, | 771 | 1 and 2 अपि च |
| ,, | 789 | in 1 and 2 ये instead of के |
| 211 | 790 | in 1 and 2 ditto. |
| ,, | 793–795 | not in 3 and 4. |
| ,, | 809 | ditto. |
| 212 | 837 | in 6 तथा न |
| 213 | 842 | in 1 and 2 सर्वमनिशं पालनं शुभं |
| ,, | 852 | in 5 द्वात्रिंशतिशतं |

## V BOOK.

| Page | Line | |
|---|---|---|
| 214 | 15, 16 | not in 3 and 4. |
| ,, | 21 | in 4 तद्राज्यं च |
| 216 | 46 | not in 3 and 4 ; in 1 पतन्त्यथ |
| ,, | 54 | not in 3 and 4. |
| ,, | 58 | ditto. |
| ,, | 61 | in 1, 2 and 5 तं ; in 4 ये |
| ,, | 62, 63 | not in 3 and 4. |
| 217 | 74 | in 4 कालो instead of कामं |
| ,, | 75, 76 | not in 1, 2, 3, 4 and 6. |
| ,, | 79 | this verse is the last in 3 and 4. |
| ,, | 84–95 | not in 1, 2 and 6. |
| 218 | 97 | in 6 मृदुता हि सुहृत्करं ; in 1 and 2 सुसुहृद्दढं |
| ,, | 98 | in 6 रहसि |
| ,, | 110 | in 5 and 6. |
| 219 | 121–126 | not in 5 and 6. |
| ,, | 130 | in 1 and 2 छलं instead of छद्म |
| ,, | 136 | in 1 and 2 ditto. |
| 220 | 156, 157 | not in 1, 2 and 6. |
| ,, | 165 | not in 6. |
| 221 | 180 | in 6 ग्रामे |
| ,, | 185 | in 6 शौर्यं instead of सैन्यं |



# II.

## A COMPARATIVE LIST OF PASSAGES FOUND IN SANSKRIT WORKS IDENTICAL WITH, AND PARALLEL TO, VERSES CONTAINED IN THE ŚUKRANĪTI.[1]

### I BOOK.

Page Line

2 27, 28 *see* Viṣṇusmṛti, śl. 101 :

क्षत्रियस्य परो धर्मः प्रजानां परिपालनं ।;

Manu II, 27–28, and VII, 144; Nītiprakāśikā VIII, 1*b*; Mahābhārata Śāntiparva Rājadharma XV, 15; LXXXVI, 23; and CXLII, śl. 34:

अशिष्टनिग्रहो नित्यं नित्यं शिष्टस्य पालनं ।

एवं शुक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥

3 44 *see* Śāntiparva Raj. CXXXIX, 54–57 :

यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ॥

कस्मात्त्वपचितिं यांति बांधवा बांधवैर्हतैः ॥ ५४ ॥

कस्माद्देवासुराः पूर्वमन्योऽन्यमभिजघ्निरे ।

यदि कालेन निर्याणसुखं दुःखं भवाभवौ ॥ ५५ ॥

भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणः ।

यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनं ॥ ५६ ॥

प्रलापस्स महान् कस्मात् क्रियते शोकमूर्च्छितैः ।

यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु॥५७॥

[1] The Mahābhārata and Mitākṣara are quoted from the Telugu edition, the Rāmāyaṇa from the Grantha edition, Manu from L. Deslongchamps' edition, Yajñavalkya from Stenzler's edition, the Smṛtis from the Benares edition, the Harivaṁśa, Bṛhatsaṁhitā, Pañcatantra, Hitōpadēśa and Kāmandakīya from the Calcutta edition, the Caraṇavyūha, Nāradasmṛti, Cāṇakyanīti and Utpalaparimala from MSS.

Page Line

3 45 *see* Śāntiparva Rāj. XV, 4:

राजदण्डभयादेके पापाः पापं न कुर्वते ।

,, 55 *see* ibidem CXXXIX, 88:

नित्यं बुद्धिमतोऽप्यर्थस्स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुर्वतः कर्म संयमात् प्रतितिष्ठति ॥

5 97 *see* ibidem CXXXIX, 83:

दैवं पुरुषकारश्च स्थितावन्योऽन्यसंश्रयात् ।
उदाराणां तु सत्कर्म दैवं क्लीबा उपासते ॥

,, ,, Rāmāyaṇa I, XVIII, 45*a*:

दैवं च मानुषं चैव कर्म ते साध्वनुष्ठितं ।

ibidem I, LVIII, 22*a*:

दैवमेव परं मन्ये पौरुषं तु निरर्थकं ।

and ibidem II, XXVII, 17:

दैवं पुरुषकारेण यस्समर्थः प्रबाधितुं ।
न दैवेन विपन्नार्थः पुरुषस्सोऽवसीदति ॥

6 119 *see* Śāntiparva Rāj. LXIX, 78:

कालो वा कारणं राज्ञो राजा वा कालकारणं ।
इति ते संशयो मा भूद्राजा कालस्य कारणं ॥

,, 121, 122 *see* Kāmandakīya I, 16:

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयः ॥

,, ,, Ibidem IV, 1:

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥

,, ,, Manu IX, 294:

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥

